श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# छान्दोग्योपनिषत्

[ उत्तरार्धं ]

સ્મરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ ॥

श्रीरामानन्दवेदान्तप्रचारिणीसमिति

श्रियः श्रियै नमः ।

अथ श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायाः

# छान्दोग्योपनिषदः

## पञ्चमाध्याये प्रथमः खण्डः

**यो ह वै ज्येष्ठं च श्रेष्ठं च वेद, जेष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥**

प्राणो वाव संवर्ग इत्यादिना बहुशः प्राणस्य श्रेष्ठत्वमतीताध्याये प्रतिपादितमिति कथं प्राण इन्द्रियान्तरापेक्षया जेष्ठः श्रेष्ठश्चेति प्रतिपादनाय पञ्चमाध्यायः प्रवर्तते ।

( यो ह वै इत्यादि ) । यः खलूपासकः प्राणमिन्द्रियान्तरापेक्षया ज्येष्ठं वयसा, श्रेष्ठं च गुणैर्वेद जानाति ज्येष्ठश्रेष्ठगुणगणसमन्वितं प्राणमुपास्ते । यदैव जीवो गर्भे आगच्छति तस्मिन्नेवावसरे प्राणस्य वृत्तिलाभो भवति । अन्यथा गर्भो न विवर्धेत, प्रत्युत विनष्टः स्यात्, इतरेन्द्रियाणां चक्षुरादीनां वृत्तिलाभस्तु तत्तत्स्थाननिष्पत्तौ सत्यामेव भवति । तस्मात्प्राणस्य वागाद्यपेक्षया ज्येष्ठत्वं श्रेष्ठत्वं च भवति ।

यः खलु ज्येष्ठत्वश्रेष्ठत्वगुणसमन्वितं प्राणं विजानाति स स्वयमपि ज्येष्ठः श्रेष्ठश्च भवति । ज्येष्ठत्वं वृद्धत्वं श्रेष्ठत्वं प्रशस्ततमत्वमिति ।

यथोक्तप्रकारेण फलप्रदर्शनेनोपासकमभिमुखीकृत्याह—

**योह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति। वाग् वाव वसिष्ठः ॥ २ ॥**

**यो ह वै प्रतिष्ठां वेद, प्रति ह तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च। चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥**

**यो ह वै संपदं वेद संहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च। श्रोत्रं वाव संपत् ॥ ४ ॥**

( प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चेति )। यो ह वै वसिष्ठमित्यादि यः खलु वसिष्ठमतिशयेन वसुमन्तं धनवन्तं वेद विजानाति स स्वयमपि स्वानां ज्ञातीनां मध्ये वसिष्ठो वसुमान् भवति। दृश्यते च लोके वचनपटुरतिशयेन वसुमान् भवति ॥ १ ॥

कस्तर्हि वसिष्ठस्तत्राह—

( वाग् वावेति ) वाग् वा वसिष्ठः, धनवत्वसंपादकसद्व्यवहारजनकत्वमेव वचसो वसिष्ठत्वमिति ॥ २ ॥

( यो ह वै प्रतिष्ठामित्यादि )। अत्र हवैशब्दः प्रसिद्ध्यर्थकः, य उपासकः प्रतिष्ठां नेत्रं वेद विजानाति उपासनं करोतीत्यर्थः, सोऽस्मिन् मर्त्यलोके, अमुस्मिन् परलोके च प्रतितिष्ठति भवतीत्यर्थः। का तर्हि प्रतिष्ठा यदुपासनमुक्तफलकम्। तत्राह—( चक्षुर्वा प्रतिष्ठा ) यस्मात् चक्षुषा मार्गादिकं पश्यन् समे विषमे च प्रतितिष्ठति तस्मात्प्रतिष्ठा चक्षुरेवेति ॥ ३ ॥

( यो ह वै संपदमित्यादि )। यः खलु सम्पदं वेद सम्पद उपासनं करोति, अस्मै उपासकाय कामा देवाः देवसम्बन्धिनो मानुषाश्च मनुष्यसम्बन्धिनः सर्वे संपद्यन्ते प्राप्ता भवन्तीत्यर्थः।

तर्हि सम्पदा कस्य ग्रहणम्? तत्राह—

( श्रोत्रं वा व संपदित्यादि )। श्रोत्रेण हि शब्दराशयो वेदा गृह्यन्ते,

**यो ह वा आयतनं वेद, आयतनं ह स्वानां भवति । मनो ह वा आयतनम् ॥ ५ ॥**

**अथ ह प्राणा अहं श्रेयसि व्यूदिरे, अहं श्रेयानस्मि, अहं श्रेयानस्मि इति । तेह प्राणाः प्रजापतिं पितरमेत्योचुः, भगवन् ! को नः श्रेष्ठ इति ॥ ६ ॥**

**तान् होवाच, यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥**

**सा ह वागुच्चक्राम । सा संवत्सरं प्रोष्य पर्येत्योवाच**

वेदार्थज्ञानं चापि भवति तदनन्तरं कर्मानुष्ठानात् तत ईप्सितप्राप्तिरिति परम्परया कामप्रापकत्वात् श्रोत्रस्य सम्पत्त्वमिति ॥ ४ ॥

( यो ह वा आयतनमित्यादि ) । यः खल्वायतनं मनो वेद मनस उपासनं करोति, स उपासकः स्वानां ज्ञातीनामायतनमाश्रयो भवति ।

किं तर्ह्यायतनम् ? तत्राह—मनो वा आयतनमिन्द्रियोपहृतस्रक्चन्दनादिविषयज्ञानलक्षणभोगायतनत्वेन मनस आयतनत्वमिति ॥ ५ ॥

मुख्यप्राणे श्रेष्ठतां दर्शयितुमाख्यायिकामाह—

( अथेत्यादि ) अथानन्तरं प्राणवागादयोऽहं श्रेयसि स्वश्रेयसि निमित्ते व्यूदिरे अहं श्रेयानस्मि, अहं श्रेयानस्मीत्येवंरूपेण विवादं कृतवन्त इति । तदनन्तरं निर्णयाय ते प्राणा वागादयः पितरं सत्यलोकप्रतिष्ठितब्रह्माणमेत्य तत्समीपं गत्वा ऊचुरुक्तवन्तः—भगवन् ? नोऽस्माकं मध्ये कः श्रेष्ठः ? ततो ब्रह्मा व्यतिरेकमुखेन तान् प्रोवाच—अस्मिन्प्राणे शरीरान्निर्गते सतीदं शरीरं पापिष्ठतरमिव भवति—अतिशयेनाशोभनं भवति स वो युष्माकं मध्ये सर्वश्रेष्ठ इति ॥ ६–७ ॥

( सा ह वागुच्चक्रामेत्यादि ) । तदनन्तरं स्वस्मिन् श्रेष्ठतासम्पादनाय

**कथमशकत ऋते मज्जीवितुम् इति। यथा कला अवदन्तः, प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा एवमिति। प्रविवेश ह वाक् ॥ ८ ॥**

**चक्षुर्होच्चक्राम। तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकत ऋते मज्जीवितुम् इति। यथा—अन्धा अपश्यन्तः प्राणन्तः प्राणेन, वदन्तो वाचा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा एवमिति। प्रविवेश ह चक्षुः ॥ ९ ॥**

**श्रोत्रं होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच, कथमशकत ऋते मज्जीवितुम् इति यथा—बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा, ध्यायन्तो मनसा एवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥**

प्रसिद्धा वाक् शरीराद् निर्गता शरीरं परित्यज्यान्यत्र गता। तदनन्तरं संवत्सरं वर्षं यावत्, प्रोष्यान्यत्र स्थित्वा पर्येत्य पुनरागत्योवाचोक्तवती।

किमित्युवाच तत्राह—( कथमित्यादि )। कथं केन प्रकारेण मदृते मदीयव्यापारमन्तरेण यूयं जीवितुं स्वकीयात्मानंधारयितुमशकत शक्तवन्त इति। तदनन्तरं वाग्व्यतिरिक्ताः प्राणाः प्रोचुः—यथा येन प्रकारेण बाला मूका अवदन्तो वाग् व्यवहारमकुर्वाणा अपि प्राणेन प्राणन्तः प्राणनक्रियां कुर्वन्तः, चक्षुषा रूपादिकं पश्यन्तः श्रोत्रेण शब्दग्राहकेणेन्द्रियेण शृण्वन्तः शब्दविज्ञानं संपादयन्तः मनसा अन्तःकरणेन ध्यायन्तः सर्वकरणचेष्टां सम्पादयन्तो जीवन्ति एवमेव वयमपि भवदृते जीवाम इति श्रुत्वा स्वस्याः कनिष्ठत्वं ज्ञात्वा वाक् तस्मिन् शरीरे प्रविवेश विहाय विवादम् ॥ ८ ॥

एवंक्रमेण "चक्षुर्होच्चक्राम" इत्यारभ्य "प्रविवेश ह मनः"

मनोहोच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति । यथा बाला अमनसःप्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥

अथ ह प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून् संखिदेत एवमितरान् प्राणान् समखिदत् । तं हाभि समेत्योचुः, भगवन् एधि त्वं नः श्रेष्ठोऽसि, मोत्क्रमीः इति ॥ १२ ॥

अथ हैनं वागुवाच, यदहं वसिष्ठोऽस्मि, त्वं तद्

एतत्पर्यन्त मंत्रा व्याख्येयाः ॥ ६ ॥ १० ॥११ ॥

( अथ हेत्यादि ) । अथ वागादीनां परीक्षणानन्तरं स मुख्यः प्राण उच्चक्रमिषन् कार्यकरणसंघातात् उत्क्रमितुमिच्छन् । यथा येन प्रकारेण सुहयः शोभनोऽश्वः परीक्षार्थमश्वारूढेन कशया आहतः षड्वीशशंकून् पादबन्धनकीलकान् संखिदेत् समुत्पाटयेत् एवमुक्तप्रकारेण मुख्यः प्राणोऽपि इतरान् प्राणान् वागादीन् समखिदत् स्वस्वस्थानेभ्यश्चालितवान्, तदनन्तरं स्वस्वस्थानात् प्रचलिताः सन्तः मुख्यं प्राणमभिसमेत्य तत्समीपमागत्य ऊचुरुक्तवन्तः । हे भगवन् ! पूजनीयत्वमेधि स्वामी भव, त्वमेवास्माकं श्रेष्ठोऽसि । मोत्क्रामीः शरीरादुत्क्रमणं माकार्षीरिति ॥ १२ ॥

(अथेत्यादि) । अथ तदनन्तरं वागेनं समुवाच—हे मुख्यप्राण ! यदहं वसिष्ठोऽस्मि, येन वसुमत्वसम्पादकत्वलक्षणेन गुणेन वसिष्ठोऽस्मि त्वं तद्गुणेन प्रतिष्ठासि । अर्थात् मयि ये गुणाः सन्ति ते त्वदधीना एवातः

वसिष्ठोऽसि इति । अथ हैनं चक्षुरुवाच, यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसि इति ॥ १३ ॥

अथ हैनं श्रोत्रमुवाच, यदहं सम्पदस्मि त्वं तत्संपदसि इति । अथ हैनं मन उवाच, यदहमायतनमस्मि त्वं तदायतनमसि इति ॥ १४ ॥

न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते । प्राणा इत्येवाऽऽचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

सर्वं गुणानामाश्रयस्त्वमेवासीति । एवंक्रमेण चक्षुरादिष्वपि योज्यम् । न ह वै वाचो न इत्यादि लौकिकाः पुरुषा आगमज्ञातारो वागादीनीन्द्रियाणि वागादिशब्दैर्न व्यवहारं कुर्वन्ति । किन्तु प्राणशब्देनैव तेषामपि व्यवहारं कुर्वन्ति । कुतः यस्मात्प्राणाधीनत्वादितरेषाम् । अतः प्राणपदेनैव तेषां व्यवहारो भवतीति ॥ १३ ॥ १४ ॥ १५ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

સમરીતિર્જદાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદેભ્યો મહામતિઃ॥

# अथ पञ्चमाध्याये द्वितीयः खण्डः

**स होवाच किं मेऽन्नं भविष्यति इति । यत्किंचिदिद-माश्वभ्य आशकुनिभ्य इति होचुः । तद्वा एतदनस्यान्नम् । अनो ह वै नाम प्रत्यक्षम् । न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥**

**सहोवाच, किं मे वासो भविष्यति इति । आप इति**

( स होवाचेत्यादि ) । स मुख्यः प्राणः वागादिदेवतां प्रत्युवाच— हे वागादयः ! मे मम प्राणस्यान्नमदनीयं किं भविष्यति ? इति पप्रच्छ, यद्यप्यचेतना इमे, तथापि चेतनावत्वं कल्पयित्वा श्रुतिर्वदतीति । ततो वागादय एवम्प्रोचुः—यत्किञ्चिद् आश्वभ्य आशकुनिभ्यः तत्सर्वमदनीयं तव । अर्थात् श्वशकुनिपर्यन्तं यदन्नजातं तत्सर्वमन्नजातं भवत एवेति । आख्यायिकातो विरम्य श्रुतिः स्वेन रूपेणाह—तद्वा इत्यादि इहलोके यत्किञ्चित्प्राणिभिर्भुज्यते तदेतत्सर्वमनस्य प्राणस्यान्नम् भक्ष्यं प्राणेनैव सर्वं तद्भुज्यत इति ।

अनो ह वै नाम प्रत्यक्षम्, अनेकप्रकारकचेष्टागुणयुक्तत्वात् प्राणस्य अन इति प्रत्यक्षं नाम यस्मात्सर्वप्रकारकचेष्टायुक्तः प्राणः ततोऽदनादि-चेष्टाया अपि प्राणसम्बन्धित्वात् सर्वप्राणिजातेन भुज्यमानमन्नं सर्वं प्राणेनैव भुज्यते प्राणस्य सर्वमन्नमिति भावः । सर्वैरुपभुज्यमानान्ने प्राणान्नत्वोपासनं स्तौति-न ह वा भवतीति, सर्वमन्नजातं प्राणस्यैवादनीयमिति चिन्तकस्य किंचिदपि अनन्नं न भवति अर्थात् प्राणविद्या सम्पन्नस्य भक्ष्याभक्ष्यदोषो न भवतीति ॥ १ ॥

( सहोवाचेति ) सर्वं तवैवान्नमिति श्रुत्वा पुनरपि प्राणः प्रोवाच हे देवाः ! किं मे वासो वस्त्रं भविष्यतीति ? ते ऊचुः आपो जलानीति

होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवति अनग्नो ह भवति ॥२॥

तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायो-क्त्वोवाच । यद्यप्येतच्छुष्काय स्थाणवे ब्रूयात् जायेरन्नेवास्मिन् शाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥

अथ यदि महज्जिगमिषेत् । अमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहा, इत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ४ ॥

जलमेव ते वास इत्यर्थः । (तस्मादित्यादि) । तस्माद् जलानां वासत्वादेव, एतत् एतस्मिन्नपि काले भोक्ष्यमाणाभोजनात् प्राक्भोजनानन्तरं चाचमनीयजलात्मकेन वाससा आच्छादितं प्राणमनग्नं कुर्वन्ति, तथोपासनकर्ता स्वयमपि लंभुको वस्त्रस्य लब्धा भवति अनग्नश्च भवतीति ॥ २ ॥

(तद्धैतदित्यादि) । तदेतत्प्राणदर्शनं वैयाघ्रपद्याय व्याघ्रपत्पुत्राय नामतो गोश्रुतये ब्राह्मणाय जबालायाः पुत्रो नाम्ना सत्यकाम उक्त्वा पुनरप्युवाच— यद्येतत्प्राणदर्शनं स्थाणवे शुष्कवृक्षायापि ब्रूयात्—श्रावयेत्, तदा तत्र स्थाणावपि शाखा जायेरन्, पलाशानि पत्राण्यपि प्ररोहेयुः, यदा शुष्के जडेऽपि प्राणविद्याया एतादृशं फलं तदा का कथा सचेतनानामुपदेश इति प्राणविद्याया अतिशयितमहत्त्वप्रदर्शनं कृतं भवतीति ॥३॥

प्राणदर्शनविदो मन्थाख्यं कर्म दर्शयति ।

( अथ यदीत्यादि ) । स उपासकः महत् महत्त्वं ज्यैष्ठ्यश्रैष्ठ्यादिलक्षणं जिगमिषेत्—इच्छेत्, तदा अमावास्याकाले दीक्षित्वा कर्मदीक्षामवाप्य पौर्णमास्यां रात्रौ तत्कालविशेषे सर्वौषधस्य ग्राम्यारण्यौषधानां मन्थं

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् संपदे स्वाहेत्याग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । आयतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ५ ॥

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति । अमो नामाऽसि । अमा हि ते सर्वमिदम् । स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः । स मा जैष्ठ्यं राज्यमाधिपत्यं गमयत्वहमेवेदं सर्वमसानि इति ॥ ६ ॥

पिष्टं श्रुवादि पात्रे दधिमधुनोरुपमथ्य प्रक्षिप्याग्रतः स्थापयित्वा जेष्ठाय श्रेष्ठाय स्वाहा इति मंत्रेणाग्नौ—आहवनीये आज्यस्य घृतेन हुत्वा हवनं कृत्वा मन्थे संपातहुतावशेषमवनयेत्—प्रक्षिपेत् ॥ ४ ॥

एवं क्रमेण पंचमोऽपि मंत्रो व्याख्येयः ॥ ५ ॥

( अथेत्यादि ) । अथ—हवनान्तरं प्रतिसृप्याग्नेः प्रदक्षिणं कृत्वा, अञ्जलौ पाणिपुटके मन्थमाधाय निधाय मन्त्रं जपति-जपेत ।

जपनीयमन्त्रमेव दर्शयति ।

( अमो नामाऽसीत्यादि ) । अमो नामासि—अम इति नाम यस्य तादृशोऽसीत्यर्थः । ननु प्राण भिन्नस्य मन्थस्य कथं अमो नामत्वं तत्राह अमाहीतित्वं प्राणोऽसि हीत्यर्थः ।

मन्थस्य प्राणत्वं दर्शयति—ते सर्वमिदमिति । इदं परिदृश्यमानं जगत् ते तव त्वदधीनं मन्थात्मकान्नाधीनत्वात्सर्वस्य जगत इत्यर्थः ।

(सहीत्यादि) । स मन्थलक्षणः प्राणः ज्येष्ठः श्रेष्ठः राजा दीप्तिमान्—अधिपतिः सर्वस्य शेषी, स मन्थलक्षणः प्राणो मा—मां ज्यैष्ठ्यं श्रैष्ठ्यं

अथ खल्वेतयर्चा पच्छ आचामति—'तत्सवितुर्वृणीमहे इत्याचामति, वयं देवस्य भोजनम् इत्याचामति, श्रेष्ठं सर्वधातमम् इत्याचामति। तुरं भगस्य धीमहि इति सर्वं पिबति। निर्णिज्य कंसं चमसं वा पश्चादग्नेः संविशति। चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः। स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥ ७ ॥

तदेष श्लोकः—

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं

राज्यमाधिपत्यं गमयतु—प्रापयतु, इदं सर्वमहमेव असानि भवानि सर्वेषां नियन्त्रित्वेन भवानीति ॥ ६ ॥

( अथ खलु इत्यादि )। अथानन्तरमेतया "वक्ष्यमाणया ऋचा पच्छः पादशो मन्त्रम् आचामति—भक्षयति, मन्त्रस्यैकैकपादेन एकैकग्रासं भक्षयेदिति। तत्सवितुर्वृणीमहे तत् श्रेष्ठं भोजनं सवितुर्देवस्य। सवितृदेवात्, वृणीमहे—प्रार्थयामः, अत्र सवितुः प्राणस्य चाभेदेन सवितुरिति कथनम् इति पठित्वाचामति पुनर्वयं श्रेष्ठं सर्वधातमं भोजनं वृणीमहे, इति पूर्वेणान्वयः। प्राणप्रदत्तभोजनेन सन्तुष्टा वयं तुरं तूर्णं झटिति भगस्य सवितुर्देवस्य स्वरूपं धीमहि ध्यायेम इति।

( निर्णिज्येत्यादि )। ततः कंसं चमसं वा कंसाकारं चमसाकारं वा औदुम्बरपात्रं निर्णिज्य प्रक्षाल्य, अग्नेः पश्चात् स्थण्डिले केवलभूमौ वा संविशति शयीतेत्यर्थः। शयाने नियमं दर्शयति—वाचंयमोऽप्रसाहः वाचं यमः वाग्यतोः अप्रसाहः न प्रसह्यते नाभिभूयतेऽनिष्टस्वप्नदर्शनेन यथा तथा संयतचित्तः सन्नित्यर्थः। स यदीत्यादि स्पष्टोऽर्थः ॥ ७ ॥

( तदेष श्लोक इति )। तत्तस्मिन् स्वप्नदर्शनविषये। एषः श्लोको

**तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने तस्मिन् स्वप्न-निदर्शने ॥ ८ ॥**

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

भवति—यदेत्यादि काम्यं कर्म कुर्वाणः स्वप्नमध्येस्त्रियं पश्यति पश्येत् तदा तस्मिन् स्वप्ननिदर्शने समृद्धिं कर्मनिष्पत्तिं जानीयादिति । अत्र द्विर्वचनं विद्यासमाप्तिसूचकम् ॥ ८ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ ॥

# अथ पञ्चमाध्याये तृतीयः खण्डः

श्वेतकेतुर्हारुणेयः पञ्चालानां समितिमेयाय । तं ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाऽशिषत् । पितेति । अनु हि भगव इति ॥ १ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । न भगव इति । वेत्थ यथा पुनरावर्तन्ता ३ इति । न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति । न भगव इति ॥ २ ॥

जीवयाथात्म्यविषयकपंचाग्निविद्यां संसारात् वैराग्यभावनायाह—

( श्वेतकेतुर्हेत्यादि ) । श्वेतकेतुर्नामतः आरुणेयः—अरुणस्यापत्यं पुमानारुणिस्तदपत्यमारुणेयः । पञ्चालानां तदाख्यजनपदानां समितिं सभामेयाय—आजगाम । तं श्वेतकेतुब्राह्मणं प्रवाहणो नामतो जैवलिर्जीबलस्यापत्यं राजा उवाचोक्तवान् । हे कुमार ! त्वा त्वां त्वदीयः पिता गौतमः, अन्वशिषत्—अनुशिष्टवान् । किमित्यपृच्छत् राजा श्वेतकेतुमिति । अनुहीति भगवः—हे भगवन् ! अनुशिष्टोस्मीति ॥ १ ॥

( वेत्थेत्यादि ) । पुनः राजा तं प्रोवाच—यदि त्वं पित्रानुशिष्टोसि, तदा त्वामहं पृच्छामि । हे श्वेतकेतो ! यत्प्रजा, इमे लोका इतोऽधि, इत ऊर्ध्वं यत्प्रयन्ति गच्छन्ति तत् त्वं वेत्थ—जानीषे किमिति ? इतरः प्राह—न भगव इति । हे राजन् ? यत्त्वया पृष्टं तदहं न जानामीति । पुनरपि राजा पृच्छति—हे कुमार ! किं जानासि यथा—इमाः प्रजाः । पुनरावर्तन्ते कर्मिणां पुनरावृत्तिप्रकारः क इति । इतरः प्राह—पूर्ववदेव न भगव इति । राजा पुनः पृच्छति—वेत्थ पथोरित्यादि । पथोर्देवयानपितृयाणमार्गयोर्व्यावर्तने व्यावर्तके भेदके रूपे किं त्वं वेत्थ जानीषे ? इतरः प्राह—पूर्ववदेव न भगव इति ॥ २ ॥

**वेत्थ यथाऽसौ लोको न संपूर्यता ३ इति । न भगव इति ; वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । नैव भगव इति ॥ ३ ॥**

**अथानु किमनुशिष्टोऽवोचथाः । यो हीमानि न विद्यात् कथं सोऽनुशिष्टो ब्रुवीतेति । सहाऽऽयस्तः पितुरर्ध-मेयाय तं होवाच अननुशिष्य वाव किल माभगवानब्रवीदनु**

पुनःपृच्छति—

( वेत्थेत्यादि ) । प्रतिदिनं गच्छद्भिरनेकैः पुरुषैरसौ लोको द्युलोको न सम्पूर्यते कस्मात् कारणादापूरितो न भवतीति । किं जानासि ? इतरः प्राह—पूर्ववदेव न भगव इति ।

पुनः पृच्छति—

( वेत्थेत्यादि ) । वेत्थ जानासि यथा येन प्रकारेण पंचम्यामाहुतौ आप उपलक्षत्वाद् भूतसूक्ष्माणि पुरुषवचसः पुरुषपदवाच्या भवन्तीति । इतरः प्राह—नैव भगव इति ॥ ३ ॥

एवमुक्तवन्तं कुमारं राजा पुनराह—

(अथेत्यादि) । अथ कुमारस्य निषेधानन्तरं नु किमनुशिष्टोऽवोचथाः । हे कुमार ! यदि त्वं न जानासि तदा कथमुक्तवानसि यदहं पित्रानुशिष्टो-स्मीति । य इमानि अर्थजातानि न विद्याद् न जानीयात् स कथं कामाद्धे-तोरनुशिष्टोस्मीति ब्रुवीत वदेदित्यर्थः ।

( सहेत्यादि ) । स श्वेतकेतू राज्ञा प्रवाहणेन आयस्त आयासितो भर्त्सित इति यावत् । पितुर्गौतमस्यार्धं स्थानं निवासस्थानमेयायाज-गाम् । गत्वा च पितुः सपीपं तं पितरमित्थं प्रोवाच—मा मां अननुशिष्य समावर्तनकाले यानि यानि उपदेष्टव्यानि तानि अननुशिष्यैवानुपदिश्यैव

त्वाऽशिषमिति ।। ४ ।।

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत्तेषां नैकंचनाशकं विवक्तुमिति । स होवाच यथा मा त्वं तदैतानवदो यथाहमेषां नैकंचन वेद यद्यहमिमानवेदिष्यं कथं तेनावक्ष्यमिति ।। ६ ।।

स ह गौतमो राज्ञोऽर्धमेयाय । तस्मै ह प्राप्तायार्हां चकार । स ह प्रातः सभाग उदेयाय । तं होवाच मानुषस्य भगवन्गौतम ! वित्तस्य वरं वृणीथा इति । स

भगवान् मां प्रति अब्रवीत्—यदहं त्वामशिषमिति ।। ४ ।।

( पञ्चमेत्यादि ) । स राजन्यबन्धुः राजापशदः प्रवाहणो मा मां पंच पंच संख्यकान् प्रश्नानप्राक्षीदपृच्छत् । तेषां प्रश्नानां मध्याद् नैकंचन नैकस्यापि प्रश्नस्य विवक्तुमुत्तरं दातुमहमशकं नाहं तदीयप्रश्नस्योत्तरे समर्थोऽभवमिति ।

(स होवाचेत्यादि) । स तत्पिता गौतम उवाच (यथेत्यादि )। हे श्वेतकेतो ! एतेषां प्रश्नानां मध्यादेकमपि अहं न जा नामि अतस्त्वां तानहं नावक्ष्यम् यदि अहमिमानवेदिष्यं तदा प्रियाय ते कथंम् नावक्ष्यम् इत्युक्त्वा स तूष्णीं स्थित इति ।। ५ ।।

पुत्रायैवं कथयित्वा तेषां प्रश्नानामुत्तरं ज्ञातुं स गौतमः पाञ्चालानां जनपदं गतवान् । तदेव दर्शयति (स ह गौतम इत्यादि) । स गोत्रजो गौतम आरुणिः राज्ञोऽर्धं स्थानमेयायाजगाम ।

( तस्मै हेत्यादि ) । प्राप्ताय गौतमाय स राजा अर्हां पूजां चकार कृतवान् । ब्राह्मणाः पूज्या इति कृत्वा पूजां चकारेत्यर्थः । ततः स गौतमः प्रातःकाले सभागे राजनि सभायामागते राज्ञि उदेयाय सभायामागतवान्

**होवाच—तवैव राजन्! मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ॥ ६ ॥**

**स ह कृच्छ्री बभूव। तं ह चिरं वसेत्याज्ञापयाञ्चकार। तं होवाच—यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः**

अथवा अर्घ्यादिपूजितो गौतमः समागत इति। ( तं होवाचेत्यादि )। तत राजा तमुवाच—हे गौतम भगवन्! मनुष्यसंबन्धि वित्तविषयकं वरं वृणीष्व धनाश्वगवादिकं वित्तं मत्तः सकाशात् प्रार्थय। ततो गौतम उवाच—हे राजन्! मनुष्यसंबन्धि धनस्य मे प्रयोजनं नास्ति यतो ब्राह्मणा अकिंचना निस्पृहाश्च भवन्ति। तादृशं धनं तवैव तिष्ठतु। किन्तु कुमारस्य मत्पुत्रस्यान्ते समीपे यां वाचमभाषथाः, ये ये प्रश्नाः, पृष्टाः तानेव वाचं ब्रूहि—तेषां प्रश्नानां प्रातिस्विकरूपेणोत्तरमेव देहि, विद्यावत्वेन भुवि विख्याता अपि ब्राह्मणा वयम् तां विद्यां न जानीमोऽतस्तामेव ब्रूहि येनाहं विद्वान् स्यामिति ॥ ६ ॥

( सहेत्यादि )। स राजा गौतमेनैवमुक्तः कृच्छ्रीबभूवातिशयेन दुःखितो जातः—अतिथिर्यस्य भग्नाशो गृहात्प्रति निवर्तते। स तस्मै दुष्कृतं दत्वा-पुण्यमादाय गच्छति इति नीत्या यदि न कथयामि तदा कुपितो ब्राह्मणो मह्यं शापं दास्यति। यदि कथयामि तदा क्षत्रकुलादन्यत्र विद्या गता स्यादिति परम्परा व्यवच्छिन्ना स्यादित्येवं चिन्ताकुलो राजा ब्राह्मणस्याप्रत्याख्येयत जानन् अतिशयेन दुःखी बभूवेति भावः। विमृश्य राजा तं ब्राह्मणं चिरं वसेत्येवमाज्ञापयाञ्चकार। ततो राजा तं गौतममुवाच – हे गौतम! यथा येन प्रकारेण त्वं मा वदः, तथैवाहं करिष्यामि। विद्योपदेशं करिष्यामीत्यर्थः (यथेयमित्यादि)। यथा येन प्रकारेणेयं वक्ष्यमाणा पञ्चाग्निविद्या पुरा विद्यमानापि यस्मात्कारणात् त्वत्तः प्राक पूर्वं ब्राह्मणान् न गच्छति न गतवती। तस्मात्कारणात् सर्वेषु लोकेषु क्षत्रस्य क्षत्रियजातीयस्यैव प्रशा-

पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूद् इति तस्मै होवाच ॥ ७ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

## अथ पञ्चमाध्यायस्य चतुर्थः खण्डः

असौ वाव लोको गौतमाग्निः। तस्याऽऽदित्य एव समित्। रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥ १ ॥

सनमभूत् क्षत्रियजातेरेवैतद् विद्योपदेष्टृत्वमासीत्। ब्राह्मणजातीयेषु एतद्विद्या नासीत् नास्ति वा। अतो ब्राह्मणानामेव समीपं गत्वा विद्यां प्रक्ष्यामीति मतिर्न कर्तव्या, तथा चिरवासाज्ञापनेन संजातापमानमपि सोढव्यमेवेति। उपदेष्टरि सर्वदैव श्रेष्ठबुद्धिः करणीयेति भावः। तस्मै होवाच—तस्मै गौतमाय चिरकालं ब्रह्मचर्यादिक्रमेणोषितवते ब्राह्मणाय राजा विद्योपदेशं कृतवानित्यर्थः ॥ ७ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

वेत्थ यथा पञ्चम्यामाहुतावाप इत्यादि अन्तिम प्रश्नोत्तरस्य तदितरोत्तरानुकूलत्वात् प्रथमतस्तदेव दर्शयति ( असौवाव इत्यादि ) हे गौतम! असौ स्वर्गो लोक एवाग्निः अग्निरिव होमाधारत्वात्। तस्य स्वर्गलोकाग्नेः आदित्यः सवितैव समित् इन्धनम्। इन्धनेनाग्निर्दीप्यते तथैव सूर्येण स्वर्गो लोको दीप्तो भवति। रश्मयो धूमः सवितुः किरणा एव धूमस्थानीयाः धूमस्येन्धनजन्यत्वादादित्य रश्मीनां धूमत्वम्! अहरर्चिः प्रकाशकत्व

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति ॥ २ ॥**

**इति छान्दोग्योपनिषद् पञ्चमाध्यायस्य**
**चतुर्थः खण्डः ॥ ४ ॥**

## अथ पञ्चमाध्यायः पञ्चमः खण्डः ।

**पर्जन्यो वाव गौतमाग्निः तस्य वायुरेव समित्, अभ्रं धूमो विद्युदर्चिः, अशनिरङ्गाराः ह्रादुनयो विस्फुलिङ्गाः ॥ १ ॥**

सामान्यात् । चन्द्रमा अंगाराः यथा अर्चिषोऽभावे अंगारो भवति । तथा दिवसावसाने एव चन्द्रमोदेति तेन चन्द्रमसोऽङ्गारत्वम् । नक्षत्राणि विस्फुलिंगाः चन्द्रावयववद् उपलभ्यमानत्वेन नक्षत्राणां विस्फुलिंगत्वम् ॥ १ ॥

तस्मिन् एतस्मिन्नग्नौ सूर्यादिलक्षणेन्धनादि युक्ते द्युलोकात्मकाग्नौ देवा इन्द्रियाणि श्रद्धां श्रद्धाशब्दबोध्या अपः जुह्वति हवनं कुर्वन्ति "श्रद्धा वा आपः" इति श्रुतेः । यद्यपि बुद्धिविशेषात्मकश्रद्धाया होतव्यत्वं न सम्भवति तथाप्यत्र श्रद्धाशब्देनाप एवोक्ता भवन्तीति । स्वर्गलोकात्मकाग्नौ भूतसूक्ष्मलक्षणाहुतिप्रक्षेपकत्वमिन्द्रियाणां कथं स्यादिति न शंकनीयम् । इन्द्रियाभावे भूतसूक्ष्माणां जीवं सपरिष्वज्य गमनासम्भवात् तेषामिन्द्रियाणमाहुति कर्तृत्वसम्भवादिति तस्या आहुतेः सोमो राजा भवति एवं यथोक्त प्रकारेण स्वकर्म बलात् स्वर्गलोकं गतो जीवः स्वर्गभोगोपयोगि

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति । तस्या आहुतेर्वर्षं संभवति ॥ २ ॥

इति छान्दोग्योपनिषद् पंचमाध्यायस्य
पञ्चमः खण्डः

—:❀:—

दिव्यदेहवान् भवतीत्यर्थः ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
चुतुर्थः खण्डः ॥ ४ ॥

( पर्यन्य इत्यादि ) हे गौतम ! पर्यन्यः वृष्टेरुपकरणाभिमानीदेव-विशेषः स एवात्र अग्निरूपेण कल्पनीयः । तस्य पर्यन्याख्याग्नेर्वायुरेव समिदिन्धनम् । वायुना पर्यन्यः समिध्यते अभ्रं धूमः धूमवल्लक्ष्यमाणत्वात् विद्युदर्चिः । प्रकाशसामान्यात् अशनिरंगाराः काठिन्यात् । ह्लादनयो मेघ-गर्जितानि विस्फुलिंगाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति । हवनप्रयोजनमाह तस्या इति । तस्या आहुतेर्वर्षं वर्षणमेव फलं भवति । स्वर्गलोकभोग-कारणकर्मणोऽवसाने सोमराजशब्दशब्दितोदेहः अब्बहुलतयाद्रतीभूय जीवेन सह मेघमण्डले पततीतिभावः ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

—❀—

# अथ पञ्चमाध्यायः षष्ठः खण्डः ।

पृथिवी वाव गौतमाग्निः, तस्या संवत्सर एव समित्, आकाशो धूमो रात्रिरर्चिः, दिशोऽङ्गाराः, अवान्तर दिशो विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति । तस्या आहुतेरन्नं संभवति ॥ २ ॥

इति छान्दोग्योपनिषद् पञ्चमाध्यायस्य
षष्टः खंडः ॥ ६ ॥

( पृथिवीत्यादि ) हे गोतम ! पृथिवी चतुर्दशभुवनाधारभूमा भगवतः पूर्णपुरुषस्य रामस्य लीलास्थानम् सैवाग्निः तस्या पृथिव्याः संवत्सर एव समिदिन्धनम् संवत्सरात्मक समयेन एधमाना पृथिवी धान्यादीनां संपत्तये समर्थाभवति । आकाशो धूमः पृथिवीत उत्थित इवाकाशो दृश्यते अग्नेर्धूम इव रात्रिरर्चिः अप्रकाशस्वरूपायाः पृथिव्याः समाना हि रात्रि उभयोस्तमो रूपत्वात् दिशोऽङ्गाराः उपशान्तत्व सामान्यात् । अवान्तर दिशो विस्फुलिंगाः क्षुद्रत्वसामान्यात् ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति । तस्या आहुतेरन्नं सम्भवति । वर्षणेन व्रीहियवादीनां निष्पत्ति दर्शनात् । श्रद्धाशब्द-ज्ञाप्यानि सूक्ष्मभूतानि । चक्षुरादीन्द्रियसहितानि स्वर्गभोगोपयोगिशरी-राकारेणपरिणतानि स्वर्गजनककर्मणो भोगेन क्षये जाते द्रवीभूतानि पर्यन्यात्मकाग्निसमवाप्य वर्षरूपाणि भूत्वा पृथिवीं प्राप्य व्रीहियवाद्यन्नानि भवन्तीति भावः ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
षष्ठः खण्डः ॥ ६ ॥

## अथ पञ्चमाध्यायः सप्तमः खण्डः ।

पुरुषो वाव गौतमाग्निः, तस्य वागेव समित् प्राणो धूमो जिह्वा अर्चिः, चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥१॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुते रेतः संभवति ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

—❀—

## अथ पञ्चमाध्यायः अष्टमः खण्डः ।

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुप-

( पुरुष इत्यादि ) । हे गौतम ! पुरुषः एवाग्निः, तस्य वागेव समित् वाचामुखेन पुरुषः समिध्यते नतु मूकः समिध्यते । तस्मात् वागेव समिदिन्धनं प्राणो धूमः धूमवद् मुखान्निर्गमनात् जिह्वाअर्चिः रक्तवर्णत्वात् चक्षु रङ्गाराः श्रोत्रं विस्फुलिङ्गा विप्रकीर्णत्व साधर्म्यात् ॥ १ ॥

( तस्मिन्नित्यादि ) । अन्नं ब्रीहि यवादि लक्षणं रेतः संभवति । हूयमानं ब्रीह्यादिकं रेतो रूपेण पुरुषे परिणमते । ब्रीह्याद्यन्न लक्षणानि सूक्ष्मभूतानि जीवसम्बद्धानि पुरुषेण भुज्य मानानि पुरुषे रेतोरूपेण परिणामं प्राप्नुवन्तीत्यर्थः ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

( योषेत्यादि ) हे गौतम ! योषा स्त्री सैवाग्निः तस्या उपस्थ एव

मन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवारेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
अष्टमः खण्डः ॥ ८ ॥

—※—

## अथ पञ्चमाध्यायः नवमः खण्डः ।

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । स उल्वावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाऽथ जायते ॥ १ ॥

समिद् इन्धनम् । उपस्थेन योषा पुत्राद्युत्पादनाय समिद्धा भवति । यदुप मंत्र्ययते स धूमः, तत्रोपमन्त्रणम् संकेतकरणम् । योनिरर्चिः, लोहितत्व सामान्यात् । यदन्तः करोति तेऽङ्गाराः तत्रान्तः करणं मिथुनीकरणं अभिनन्दाः विस्फुलिङ्गाः तज्जनितसुखलेशाः रेतो रूपाणि भूतसूक्ष्माणि योनिद्वारा स्त्री शरीरं प्रविष्टो भूत्वा गर्भत्वेन परिणमन्ते इति भावः ॥१–२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
अष्टमः खण्डः ॥ ८ ॥

( इतितु इत्यादि ) इतितु एवमुक्तप्रकारेण पंचम्यामाहुतो योषात्मकाग्नौरेतस आहुतौ आपः सूक्ष्मभूतानि पुरुषवचसो भवति तानि भुतानि पुरुषपदवाच्यानि भवन्तीति ।

**स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ २ ॥**

**इति छान्दोग्योपनिषद पञ्चमाध्यायस्य**

**नवमः खण्डः ॥ ९ ॥**

—❀—

(स, उल्वावृत इत्यादि) सगर्भउल्वावृतः जरायुणाचर्मपुटकेन वेष्टितः सन् दश वा नव वा यावद्वा एकादश द्वादशमासान् यावत् अन्तर्मातुरुदरे शयित्वा निवासं कृत्वा। अथानन्तरं जायतेसमुत्पद्यते मातुरुदराद्बहिर्गतो भवति ॥ १ ॥

(सजात इत्यादि) सगर्भो जातः समुत्पन्नः, यावदायुषं यावत्पर्यन्तमायुः तच्छरीरजनं कर्मतावत्पर्यन्तं जीवति प्राणधारणं करोति। आयुषः क्षयसमये एव तं प्रेतं मृतं पुरुषं दिष्टं परलोकाय निर्दिष्टं यद्वादिष्टं कर्मानुसृत्य यतः द्युलोक पर्यन्याद्यग्नेः इतः इहागतः, यतश्चस्त्रीरूपाग्नेः सकाशात् संभूतः समुत्पन्नः तस्मैदेवा अग्नये हरन्ति ततश्चद्युपर्यन्य पृथिवी पुरुषयोषात्मकाग्निषु पुनः पुनरपि सम्भ्रमतीति। अयमत्रोपन्यासः संसारात् वैराग्यं दर्शयितुमुपन्यासः। तथा हि—अतिशयित कष्टं हि मातुरुदरे मूत्रपुरीषवातकफ पित्तादिपूरिते तदनुलिप्तस्य गर्भस्य उल्वाशुचिपट वेष्टितस्य शुक्रशोणितबीजस्य मातुरशित पीतरसानुप्रवेशेन परिवर्धमानस्य निरुद्धबलवीर्यशक्ति तेजः प्रज्ञाचेष्टस्य दशमासादिद्वादशमासात्मकबहुकालं शयनम् तदनन्तरं योनिमार्गेणातिशयं पीड्यमानस्य कष्टतमानिःसृतिः। ततः प्रारब्धकर्मणा प्राप्तं यावदायुस्तावदेव जीवनम्। पुनरपि घटीयन्त्र न्यायेन चन्द्रलोके आरोहणमवरोहणमिति संसाराद् वैराग्यमेव दर्शयतीति भावः ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य

नवमः खण्डः ॥ ९ ॥

# अथ पञ्चमाध्यायः दशमः खण्डः

तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इन्युपासते तेऽर्चिषमभिसंभवन्ति। अर्चिषोऽहरह्न आपूर्यमाण पक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् ॥ १ ॥

मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति

अथ वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तने इत्यादिना तृतीय प्रश्नस्योत्तरं दातुमयमुपक्रमो भवति (तद्य इत्थं विदुरित्यादि) तत्प्रत्यगात्मस्वरूपं ये गृहस्था इत्थं पूर्वोक्तप्रकारेण द्युपर्यन्यपृथिवीपुरुषयोषित्सु श्रद्धा सोमवृष्ट्यन्त रेतो देहकतया देहादिलक्षणप्रकृतिभिन्नतया च विदुर्जानन्ति। द्युलोकाद्यग्निभ्यः क्रमेण वयं समुत्पन्ना अग्निस्वरूपाः पंचाग्न्यात्मान इत्येवं ये गृहस्था जानन्तीत्यर्थः। एवं ब्रह्मरूपेणात्मानं जानन्ति तथा ये चारण्योपलक्षिता वैखानसाः परिब्राजकाश्च अरण्ये अरण्यवासिनः श्रद्धां पुरस्कृत्य तपः—तपः शब्दवाच्यं ब्रह्म रामाख्यपरमात्मानम् उपासते तदुपासनं कुर्वन्ति। ते अर्चिषमभिसम्भवन्ति। मरणानन्तरमर्चिर्देवतामातिवाहिकतया प्रसिद्धामभिसम्भवन्ति प्राप्नुवन्ति। अत्रप्रकरणेऽर्चिरादिपदं सर्वत्राभिमानिकदेवपरकम्। अर्चिषोऽहः ततोऽग्रे गत्वा दिवसाभिमानिदेवं प्राप्नुवन्ति अह्न आपूर्यमाणपक्षं तत आपूर्यमाणपक्षात् यान् षडुदङेति मासांस्तान् प्राप्नुवन्ति ॥ १ ॥

ततो मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं ततश्चन्द्रमसो विद्युतम्। तत्पुरुष इत्यादि तत्पुरुषो वैद्युतो हि देवविशेषः, स एव अमानवः मानवभिन्नोऽसंसारी ब्रह्मलोकादागत्य एतान् द्विविधोपासकान् गृहस्थान् वैखानसान् वा ब्रह्मगमयति प्रापयति। अमानवस्स एत्य ब्रह्मलोकान्गमय-

**एष देवयानः पन्था इति ॥ २ ॥**

**अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति। धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड् दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥**

**मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्र-**

तीति श्रुत्यन्तरात् । [illegible] ग्रहणम् न [illegible] प्राणस्योत्क्रमणासम्भवात् न तस्य प्राणा उत्का[illegible] इहैव [illegible]लीयन्ते इति श्रुतेः । २ ॥

( अथ य इमे इत्यादि ) अथ ये पुरुषाग्रामे एव वर्तमाना इष्टं दर्शपूर्णमासयागादिकम् पूर्तमारामतडागादिकम् दत्तम् दानं हिरण्यादीनाम् तथोपवासादिकम् उपासते कुर्वन्ति । याग दान होमोपवासादिकर्माणि कुर्वन्तीत्यर्थः । ते यथोक्तकारिणः पुरुषा एतच्छरीर पातादनन्तरं धूमम् आतिवाहिकतया धूमादिदेवतां प्राप्नुवन्ति अत्रापि धूमरात्रिपक्षादिशब्दाः तत्तदभिमानिदेवता-बोधकाः अचेतनानां प्रापकत्वासंभवाद् । धूमाद्रात्रिमित्यादि सन्दर्भः पूर्ववदेवव्याख्यातव्यः दक्षिणैति दक्षिणां दिशमादित्यः प्राप्नोति । दक्षिणायनमासाभिमानिनीर्देवताः प्राप्नुवन्तीति भावः । नैते संवत्सरमभिप्राप्नुवन्ति इति ॥ ३ ॥

एते केवलकर्मकारिण इष्टादिकं सम्पादयन्तो दक्षिणायनमाससम्बन्धिनीं देवतामवाप्यापि विद्वांस इव संवत्सरं संवत्सराभिमानिदेवं न प्राप्नुवन्ति । किन्तु मासेभ्यः पितृलोकम् तस्मात् आकाशमाकाशात् चन्द्रमसं प्राप्नुवन्ति । ( एष सोमो राजा ) । अत्रैतत्पदेन इष्टादिकारिण एव ग्रहणम् । न तु चन्द्रमसः, तस्य सोमराजभावोपदेशस्य निरर्थकत्वात् । किन्तु तस्या आहुतेः सोमो राजा भवतीति न्यायाद् स्वर्गभोगोपयोगिदिव्यदेहयुक्तो भवतीति । ( तद्देवानामन्नम् ) तत्ते इष्टादिकारिणश्चन्द्रमण्डलमासाद्य

भसम् । एष सोमो राजा । तद्देवानामन्नम् । तं देवा भक्षयन्ति ॥ ४ ॥

तस्मिन्यावत्संपातमुषित्वा । अथैतमेवाध्वानं पुनर्नि-

देवतानामन्नभावमुपयन्ति । अयं भावः—न ते आजानदेवतान् भक्षयन्ति मोदिकादिवत् । किन्तु कर्मदेवेन सह विहरणादिकं कुर्वन्ति । ते कर्मणा देवत्वमापन्नाः स्वर्गफलभोगयोग्यदेहमासाद्याजानसिद्धदेवानां विहरणादिक-कार्योपकारका भवन्ति । राजन्य इव विशः, वैश्यानामिव पशवः यथा वैश्यस्योपभोगे करणभूता भवन्ति । पशवो न तु पशून् ते चर्वयन्ति । एवं देवा न तान् चर्वयन्ति । किन्तु तेन सह विहरणादिकं कुर्वन्ति । न ह वै देवा अश्नंति एतदेवामृतं दृष्ट्वा तृप्यन्ति । इत्यादिना तेषां चर्वणादि व्यापारप्रतिषेधादिति । ( एतदेव दर्शयति तं देवा इत्यादि ) । तम्—इष्टादिकारिणां कर्म देवभावमुपगतम् । देवा आजानसिद्धदेवा भक्षयन्ति स्वकीयकैंकर्यादिकार्येषूपयोगं कुर्वन्ति पशूनिव विशः । एतत्तत्त्वं विशेषतो "भाक्तं वानात्मवित्त्वादिति" सूत्रे द्रष्टव्यम् ॥ ४ ॥

( तस्मिन् यावदित्यादि ) । तस्मिन्स्वर्गलोके यावत्संपातम् अत्र यावत् शब्दः साकल्यार्थकः, संपातशब्दः कर्मशेषपरकः संपतति अनेनेतिसम्पात इति व्युत्पत्तेः । उषित्वा स्वर्गे निवासं कृत्वा द्वितीयप्रश्नस्योत्तरं दर्शयति अथैत-मित्यादि अथानन्तरम् एतमेवाध्वानम् धूमादि मार्गं येन यथा—चन्द्र-मंडलमधिकर्मफलोपभोगाय अधिरूढः तमेव मार्गम् संप्राप्य पुनर्निवर्तन्ते । अवरोहविपरीत क्रमेण गच्छन्ति धूमरात्र्य परपक्षदक्षिणायन षण्मासपितृ-लोकाकाशक्रमेणावरोहणं चन्द्रमण्डले गमनात् तेनैव विपरीतक्रमेणावरो-हणंप्राप्तं तत्र श्रुतिर्विशेषमाह—( आकाशमित्यादि ) । गमनसमये आकाशाच्चन्द्रमण्डलं गतवान् एवमागमनसमये चन्द्रादाकाशे । आगच्छन्ति । आरोहणावरोहणयोरुभयत्रापि आकाशसम्बन्धः समान एव तत आकाशाद्वायुमभिसम्भवन्ति । तत्राकाशादिभवनं न तच्छरीर-

वर्तन्ते यथेतम् । आकाशमाकाद्वायुम् । वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

अभ्रं भूत्वा मेघो भवति । मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधि वनस्पतयस्तिलमाषा इति जायन्ते अतोवै खलु दुर्निष्प्रपतरम् । यो यो ह्यन्नमत्ति योरेतः

कत्वम् । किन्तु आकाशसदृशाः सूक्ष्मा भवन्ति । यतः सर्गकालादारभ्य प्रलयपर्यन्तमाकाशाभिमानिदेवानां सत्वेन प्रतिक्षणमवरोहतामाकाशाद्यभिमानिदेवतास्वरूपत्वानुपपत्तेः । अतः आकाशसादृश्यमेवार्थः । यज्जलं चन्द्रमंडले भोगार्थमारब्धं तस्य कर्मक्षये द्रवीभवनाद् व्यावर्तकाकारविनाशेनाकाशसादृश्ये तादृशजलोपसृष्टा जीवा अप्याकाशतुल्याः कथ्यंत इति । वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति । तत्रापोजलाग्निविभर्ति धारयतीति अभ्रम् ॥ ५ ॥

ततो मेघो भवति जलं सिंचतीति मेघः मिहसेचन इतिधातोर्मेघ पदव्युत्पत्तेः । एवं च मेघशब्देन वर्षोन्मुखावस्थोच्यते । तत्रजलधारणा अवस्था अभ्रपदवाच्या वर्षोन्मुखावस्था च मेघपदवाच्या अयमेवाभ्रमेघ योर्भेदः । मेघो भूत्वा प्रवर्षति । स इष्टादिकारी मेघसंश्लिष्टो भूत्वा जलधारारूपेण पृथिव्यां निपततीत्यर्थः । ( त इहेत्यादि ) । ते वर्षसंश्लिष्ट भूतसूक्ष्मसंपरिश्वक्ता जीवा इह पृथिव्यां पतित्वा व्रीहियवादिरूपेण जायन्ते समुत्पन्ना भवन्ति ( अतो वै खलु इत्यादि ) । अतोऽस्मात् स्थावरादिभावात दुः दुःखेन निर्गमनं भवति । यथा—आकाशादितोऽल्पकालेन निर्गमनं भवति न तथा व्रीह्यादितोऽल्पकालेन निर्गमनं भवति । किन्तु अतिचिरेण निर्गमनं भवतीत्यर्थः । ( यो य इत्यादि ) । यः व्रीह्यादिसंश्लिष्टोऽवरोहति जीवः, सः यो योऽन्नमत्ति भक्षयति यो रेतः सिंचति भूयः पश्चात्तदेव भवति रेतः सिग् भवति । यथा—आकाशादिभाव औप-

सिञ्चति तद्भूय एव भवति ॥ ६ ॥

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा ॥ ७ ॥

अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं

चारिकस्तथैव रेतः सिग्भावोऽपि गौण एवेति ॥ ६ ॥

( तद् य इहेत्यादि ) । तत् तेषु अवतरत्सु मध्ये ये अभ्याशः अभ्यागन्तारः परलोकादिहलोकमागच्छन्तः रमणीयचरणाः रमणीयकर्माणः चर्यते इति चरणं कर्म इतिव्युत्पत्त्या चरणशब्देन कर्मणो ग्रहणम् अयं भावः—चन्द्रलोकादत्रागच्छन्तो यदि शुभ कर्माणो भवन्ति तदा ते रमणीयां योनिमापद्येरन् शुभकर्मकर्तारः शुभामेव योनिं प्राप्नुवन्तीत्यर्थः । तामेव योनिं दर्शयति ब्राह्मणेत्यादि ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा ब्राह्मणादिरूपेण समुत्पन्ना भवन्तीत्यर्थः ।

अथ ये अभ्याश आगन्तारः चन्द्र मण्डलादवतरन्तः कपूयचरणा जुगुप्सित कर्माणस्ते कपूयां कुत्सितांयोनिमापद्येरन् भुक्तशिष्टकुत्सित कर्मानुसारेण कुत्सितयोनावेव जन्म गृह्णन्तीत्यर्थः । तदेव दर्शयति ( श्वयोनिं वेत्यादि ) श्वयोनिं वा कुक्कुरयोनिं वा कुत्सितश्वादि योनौ जन्म प्राप्नुवन्तीत्यर्थः । सूकरयोनिं वा विड्वराहे वा समुत्पत्तिं लभन्ते यदि कदाचिन्मनुष्यो भवति तदा चाण्डालादि पापयोनिमापद्येरन्निति ॥ ७ ॥

"वेत्थ यथासौ लोको न संपूर्यते" इति चतुर्थ प्रश्नस्योत्तर दातुमाह—( अथैतयोरित्यादि ) । अत्राथशब्दः प्रतिवचनोपन्यासे भवति ॥

**स्थानं तेनासौ लोको न संपूर्यते। तस्माज्जुगुप्सेत तदेष**

एतयोर्देवयानपितृयाणयोः पथोर्मार्गयोर्मध्यात् कतरेण च न केनापि मार्गेण गच्छन्ति। अर्थात् यानि भूतानि मार्गद्वयप्राप्तिकारण विद्याकर्म-रहितानि तानीमानि भूतानि क्षुद्राणि दंशमशककीट पतंगादीनि अस-कृदावर्तीनि जायस्व म्रियस्वेति भवन्ति ये जीवाः विद्याकर्मरहिताः ते न स्वर्गं गच्छन्ति न वा ब्रह्मलोकं गच्छन्ति किन्तु बारं बारं पापयोनौ पुनः पुनर्जायन्ते म्रियन्ते चेत्यर्थः। ( एतत्तृतीयं ) स्थानम्—अत्रैतच्छब्देन पाप-कर्माणः परामृष्टा भवन्ति। सर्वनाम पदानां पूर्वनिर्दिष्ट प्रधान बोधक-त्वात्। स्थान शब्दाभिप्रायेण चैक वचनम्। पूर्वकथितद्युलोक ब्रह्म-लोकापक्षेया दंशमशकादि क्षुद्र जन्तु भवनादि लक्षणस्थानस्य तृतीय-त्वात् तादृश पाप स्थान सम्बन्धेन पापकर्मकर्तरि एव तृतीयं स्थानमिति कथ्यन्ते। तेनाऽसौ लोको न संपूर्यते तेन कारणेन हे गौतम! तृतीय स्थान शब्दितैः पापकर्मभिरसौद्युलोकः न सम्पूर्यते कदाचिदपि पूरितो न भवति तृतीयस्थानस्य विद्यमानत्वात्। एतस्य पापाख्य तृतीयस्थानस्य सद्भावात्। एतादृश स्थाने एव पापजीवानां प्रायेण गमनात् द्युलोक गन्तृणामत्यल्पत्वात् द्युलोको गमनागमनेन पूरितो न भवतीत्यर्थः। ( तस्माजुगुप्सेतेति )। यस्मात्कारणात् संसारिणां गति रुक्तरीत्यातिकष्टतरा भवति। तस्मात्कारणात्संसाराद् जुगुप्सेत। एतादृश संसार सागरे मम पातो मा भवतु, एवंरूपेण संसारं निन्देत् संसार स्वरूपं सम्यगालोच्य संसारजन कर्मणो व्यावृत्य भगवद्भजनादिकं युक्तिफलक कर्मण्येवाभिरतिं कुर्यात् न तु संसार जनककर्मणि। पापात्मकः संसारस्तु कष्टजनकत्वात् त्याज्य एव। योऽपिस्वर्गादिसुखजनकः सोपि फलतः कष्टजनकत्वात् त्याज्य एव। तदुक्तम्—"शृंखला स्वर्णजातापि बन्धनाय न संशयः" इति। मुक्तिजनक विद्यास्वरूप ज्ञानस्यफलान्तर मप्यैहिकं दर्शयति— ( तदेष श्लोक ) इति। अत्र तच्छब्दः प्रसिद्धार्थकः कला च सा कान्ति

श्लोकः ॥ ८ ॥

स्तेनो हिरण्यस्य सुरां पिवंश्च गुरोस्तल्पमावसन्ब्रह्महा च एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति ॥ ९ ॥

अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
दशमः खण्डः ॥ १० ॥

मतीकलावत इति वत्। एष वक्ष्यमाणश्लोकः प्रसिद्ध एतद्विषये इत्यर्थः ॥ ८ ॥

हिरण्यस्य सुवर्णस्यस्तेनश्चौर्यकर्ता सुरांमद्यं पिवन् मद्यपायी गुरोस्तल्पं शय्यामावसन् गुरुतल्पगामीत्यर्थः। ब्रह्महा ब्रह्मघाती एते चत्वारः, तथा एतैः सह आचारन् स्तेनादि चतुर्भिः सह विद्यायोनि सम्बन्धमाचारन् कुर्वन् पंचमोऽपि पतन्ति अतिघोरे संसारसागरे पतिता भवन्ति इति ॥९॥

( अथ ह य इत्यादि )। य उपासक एतान् द्युपर्यन्यादि योषान्तमग्नीन् एवं यथोक्त प्रकारेण वेद उपास्ते स उपासकः तैः स्तेनादिभिः आचारन् विद्यां योनि संबन्धादिकमाचरन् कुर्वाणेपि पाप्मनानीचलोक प्रवर्तक पापकर्मणा न लिप्यते लिप्तो न भवति। इत्थं महाभागा इयं विद्यापहत्वेन पापकर्मरहित्वेन पापकर्मरहितः शुद्धोऽपापः पूतः पवित्रः पुण्य लोको भवति स्वर्गादिलोकमवाप्नोति। य एवं वेद य एवं वेद, द्विरुक्तिः सर्व प्रश्न प्रतिवचन समाप्तिबोधिकेति ॥ १० ॥

इति छान्दोग्योपभिद आनन्दभाष्ये पञ्चमाध्यायस्य
दशमः खण्डः ॥ १० ॥

# अथ पञ्चमाध्यायः एकादशः खण्डः

प्राचीनशाल औपमन्यवः, सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्मेति ॥ १ ॥

ते ह संपादयां चक्रुः। उद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्या

दक्षिण मार्गेण ये गच्छन्ति ते देवानामन्नं भवन्ति, तथा क्षुद्रजन्तु लक्षणाकष्टा संसारगतिः कथिता तदुभयपरिहारेच्छया वैश्वानराद् भावप्राप्त्यर्थमयमुपक्रमः क्रियते। आख्यायिकातु विद्यास्तुत्यर्था सुखावबोधार्था च तत्राह—( प्राचीनशाल इत्यादि )। प्राचीनशालो नाम्ना उपमन्यो रपत्यमुपमन्युसुत इत्यर्थः तथा सत्य यज्ञो नाम्ना पुलुषस्यापत्यं पौलुषिः पुलुषसुत इत्यर्थः तथा इन्द्रद्युम्नो नाम्ना भल्लवेरपत्यं भाल्लविस्तदपत्यं भाल्लवेयः। तथा जन इति नाम्ना शर्कराक्षस्यापत्यं शार्कराक्ष्यः बुडिलो नामत अश्वतराश्वस्यापत्यमाश्वतराश्विः। ते ह एते पंचापि महाशालामहागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः सम्पन्ना इत्यर्थः। महाश्रोत्रियाः श्रुताध्ययनादिभिः सम्पन्नाः समेत्यैकत्रामिलित्वा मीमांसांचक्रुः विचारणां कृतवन्त इत्यर्थः। को न आत्मा किं ब्रह्मेति नोऽस्माकमन्तर्यामितया आत्मभूतं ब्रह्मकिमिति ते विचारयामासुः ॥ १ ॥

ते ह सम्पादयां चक्रुः ते पंचापि ब्राह्मणा विचारं कृत्वापि आत्म स्वरूप ब्रह्म विषये निश्चयमलभमानाः आत्मभूत ब्रह्मण उपदेशकं कमपि निश्चितवन्तः। किमिति निश्चितवन्तः तत्राह—उद्दालको ( वै इत्यादि ) हे भगवन्तः पूज्याः! अयमारुणि रुरुणस्यापत्यमुद्दालको नामतः संप्रति

गच्छामेति तं हाभ्याजग्मुः ॥ २ ॥

स ह संपादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्य-मभ्यनुशासानीति ॥ ३ ॥

तान्होवाच । अश्वपतिर्वै भगवन्तोऽयं कैकयः संप्रतीम-मात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामेति । तं

इदानीं वैश्वानरमात्मानमदभिमतमध्येति उपास्ते। अथवा तादृश मात्मानमवगच्छति विजानाति। तमुद्दालकं हन्त वयं सर्वे अभ्यागच्छामः इत्येवं क्रमेण निश्चित्य तमुद्दालकमभ्याजग्मुः तत्समीपं गतवन्त इत्यर्थः स उद्दालकस्तान् श्रोत्रियान् ब्राह्मणान् समागतान् दृष्ट्वा तदागमन-प्रयोजनं च ज्ञात्वा सम्पादयाञ्चकार—विजारितवान्। किं विचारितवान् तत्राह—( प्रत्यक्ष्यंतीत्यादि ) इमे महाशाला महाश्रोत्रियाः पंचापि ब्राह्मणा मां वैश्वानरमात्मानं प्रक्ष्यन्ति। तद्विषये प्रश्नं करिष्यन्ति। परन्तु नाहं तत्सर्वं प्रतिपत्स्ये तेभ्यस्तदुत्तरं दातुं शक्नोमि वैश्वानरविषयक-विज्ञानाभावात्। हन्त अस्मात् काराणादन्यं वैश्वानराभिज्ञं कमपि अनु-शासानि उपदिशानि। अयमाशयः—तान् दृष्ट्वा तदभिप्रायं च ज्ञात्वा उद्दालको वैश्वानरानभिज्ञो वैश्वानराभिज्ञं कमपि एते पृच्छन्तु तस्य च नाम कथयामीत्येवं रूपेण मनसिनिश्चयं कृतवानिति ॥ ३ ॥

एवमुक्त प्रकारेणोद्दालको मनसि विचार्य्य तान् ब्राह्मणान् प्रोवाच किमुवाच तत्राह—( अश्वपतिर्वै इत्यादि ) । हे भगवन्तः पूजार्हा ब्राह्मणाः ! नाम्ना अश्वपतिः केकयस्यापत्यं कैकयो राजा संप्रति इदानीं। वैश्चामरनात्मानमध्येति—तदुपासनं करोति यद्वा वैश्चानरं जानाति। अतस्तमेव वयं सर्वे अभ्यागच्छामः—तत्समीपं वयं गच्छामः। तमश्वपतिं

हाभ्याजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार। स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

सर्वे अभ्याजाग्मुः—तत्समीपं सर्वे गतवन्त इति ॥ ४ ॥

( तेभ्यो ह इत्यादि) तेभ्यः प्राप्तेभ्यः समागतेभ्यो ब्राह्मणेभ्यो राजाऽश्वपति पृथक्पृथक् अर्हाणि अर्हणानि पूजाः भृत्यैः पुरोहितैश्च कारयाञ्चकार—कारितवान्। तदनन्तरं स राजा अन्यस्मिन् दिने प्रातःकाले संजिहानः स्वभवनं त्यजन् स्वकीय भवनान्निर्गत्य ब्राह्मणसमीपं गत्वा तान् ब्राह्मणान् प्रति उवाच—विनयेनोपगम्य किमुवाच तत्राह—( न मे स्तेन इत्यादि )। हे भगवन्तः पूजार्हा ब्राह्मणाः मदीये जनपदे मदधिष्ठित राज्ये स्तेनश्चौरः स्वर्णादीनामपहर्ता न विद्यते तथा मदधिष्ठित जनपदे कदर्यः सति विभवे अदाता दान रहितो न वा विद्यते न मद्यपः द्विजोत्तमः सन् मद्यपायी न कोऽपि विद्यते, नानाहिताग्निः शतगवादि योग्यतायां सत्यामनाहिताग्निर्न विद्यते। नाविद्वान् अधिकारानुरूप-त्रैवर्णिको विद्याध्ययनादि शून्यो न वर्तते न स्वैरी परदारगन्ता वा न विद्यते। स्वैरिणी कुतः यतः स्वैरी पुरुषो नास्ति तदा स्वैरिणी पुंश्चली वा न विद्यते। नहि एभिदुष्टैः करमादाय मदीयराज्यकोशे धनं विद्यते। किन्तु विशुद्धं दानयोग्यं धनं मत्पार्श्वे विद्यते मम प्रतिग्रह योग्यताऽस्तीति-भावः ( यक्ष्यमाणो वै इत्यादि )। हे भगवन्तः। यक्ष्यमाणोऽहमस्मि

**ते होचुः येन हैवार्थेन पुरुषश्चरेत्तं हैव वदेदात्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥**

**तान्होवाच प्रातर्वः प्रतिवक्तास्मीति । ते ह समित्पा-**

अचिरेणैव कालेन अहं यागं करिष्यामि । तस्मिन् यागे एकैकस्मै ऋत्विजे यावत्यावत्संख्याकं यावत्परिमाणकं धनं दक्षिणारूपेण दास्यामि । तावत्परिमाणकं धनं भगवद्भ्यो भवद्भ्यः पृथक्पृथक् रूपेण दास्यामि । तस्मात्मत्तो धनलाभाय तावत्कालमत्रैव भगवन्तो ब्राह्मणा वसन्तु मत्समीपे निवासं कुर्वन्तु । इमे विद्या प्राप्त्यर्थमत्पार्श्वे समागताः । किमिमे विद्यायोग्याः सन्ति न वेति संशय्य धनलोभप्रदानेन परीक्षिता इति ॥१५॥

यथोक्त प्रकारेण राज्ञा परीक्षिताः प्रार्थिता वा ते ब्राह्मणाः किमूचुस्तत्राह—( ते होचुरित्यादि ) ते ऋषयो राज्ञा प्रार्थिता एवमूचुः किमिति तदाह—( येनेत्यादि ) येन अर्थेन प्रयोजनेन यादृश प्रयोजनमुद्दिश्य पुरुषश्चरेत् आगच्छति तं हैवं वदेत्, तमेवार्थं प्रयोजनं तस्मै वदेत्, अहं भवदीयं प्रयोजनं करिष्यामीत्येवं वदेत्, नान्यत्प्रलोभनादिकं दातव्यमिति । अस्माकं समीहितं कर्तव्यम् । अस्माकं समीहितो वैश्वानर आत्माः तं चात्मानं हे राजन् त्वं सम्प्रति इदानीमध्येषि जानासि तस्मात्तमेवात्मानं वैश्वानरं ब्रूहि—वैश्वानरस्यैवोपदेशं कुरु नान्यत् मे प्रयोजनं विद्यते न वयं ब्राह्मणा अरण्ये वासिनो धनार्थिनस्त्वत्सकाश मागवन्त इति विश्वान्समस्तान्नरान्नयतीति विश्वानरः अथवा विश्वे एनं नरा नयन्तीति विश्वानरो विश्वानर एव वैश्वानर वायसादिवत् ॥ ६ ॥

( तान् होवाचेत्यादि ) एवं क्रमेण ब्राह्मणानामभिमानं विशोध्य प्रातःकाले उत्तरं दास्यामीति मत्वा प्रोवाच—हे ब्राह्मणाः त्वदीय प्रार्थित प्रश्नस्य प्रातःकाले प्रतिवक्तास्मि प्रतिवचनं दास्यामीति । ( ते हेत्यादि ) ते महर्षयः राज्ञोऽभिप्रायं ज्ञात्वा समित्पाणयः समिद्भारहस्ताः अपरेद्युः

णयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ॥ ७ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
एकादशः खण्डः ॥ ११ ॥

## अथ पञ्चमाध्यायः द्वादशः खण्डः।

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो

पूर्वाह्णे प्रतिचक्रमिरे। वयं त्वदीय शिष्याभवेम इत्युपगतवन्तः। तान् त्यक्त स्वाभिमानान् समित्पाणीन्दृष्ट्वा विद्योपदेशयोग्यतां च ज्ञात्वा अनुपनीयैव। 'ब्राह्मणभिन्नेन ब्रह्मणो नोपनेतव्य' इत्येवं शास्त्रवचनमनुस्मृत्य ब्राह्मणैः समर्पितं समिदाद्युपायनमस्वीकृत्य मैत्री बुद्ध्यैव एतद्वक्ष्यमाणमुवाच। यस्मात्कारणात्महाशाला महाश्रोत्रिया अपि इमे ब्राह्मणाः स्वकीयं महाशालात्वाभिमानं परित्यज्योपायन हस्ताः अब्राह्मणं जात्या हीनं राजानं विद्यार्थितया समागताः तस्मात्कारणात् अन्यैरपि तथैव कर्तव्यमित्यनया आख्यायिकया सूचितं भवतीति ॥ ७ ॥

इति छान्दोग्योपविशद आनन्दभाष्ये पञ्चमाध्यायस्य
एकादशः खण्डः ॥ ११ ॥

स राजा किमुवाच तदेव दर्शयति—( औपमन्यव इत्यादि )। हे औपमन्यव! त्वं कमात्मानं उपास्से। कस्योपासनं त्वं करोषीति पप्रच्छ। न चात्राचार्योभूत्वा शिष्यं पृच्छतीति न युक्तमिति वाच्यम्। अन्यत्रापि तथा दर्शनात् "यद्वेत्थतेनमोपसीद ततस्ते ऊर्ध्वं वक्ष्यामीति न्यायदर्शनात्। एभिर्वैश्वानरात्मनि किञ्चित्ज्ञातं किंचिदज्ञातमिति विज्ञाय ज्ञानांशबुभुत्सया तान् एकैकशः पृष्टवान्। अतो नाचार्य प्रश्नकरणे दोषः। एवमाचार्य-

राजन्निति होवाच । एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । मूर्धा

प्रश्नानन्तरमौपमन्यवः प्राह—हे भगवन् राजन्! दिवं द्युलोक शरीरकं वैश्वानरमहमुपास्से । राजा प्राह—हे औपमन्यव! यं त्वमात्मानं द्युलोकावयवं वैश्वानरमुपास्से उपासनं कुरुषे, एष वैश्वानर आत्मा आत्मनोऽवयवभूतः सुतेजाः शोभनं तेजः प्रकाशो यस्य स सुतेजाः द्युलोको हि सूर्य चन्द्र नक्षत्रादियुक्ततया सुतेजा भवतीत्यर्थः । यस्मात्कारणात् द्युलोक विशिष्टो वैश्वानरस्त्वयोपास्यमानः सुतेजस्त्वगुण सम्बन्धेनसुतेजा वैश्वानरः तस्मात्कारणात्तत्प्रभावेन तव कुले सुतं प्रसुतमासुतं दृश्यते । तत्र सुतमभिषुतं सोमात्मकम् प्रकर्षेण सुतं प्रसुतम् । आसुतमहर्गणादिषु । सुतादयः शब्दा एकाहाहीन सत्रकर्मगताभिषवण बोधकः सुतशब्दवत्व सामान्यात् । ततश्च सुतेजस्त्वोपासनायाः सुतादिफलकत्वमुपपन्नं भवतीति ॥ १ ॥

अपि च सुतेजस्त्वादिगुणक वैश्वानरोपासनाप्रभावादेव अन्नमन्नोपलक्षितं लौकिकं भोग्यजातं दीप्ताग्निः सन् अत्सि । तथाप्रियं पुत्रादिकं पश्यसीति । यथात्वं सुतेजस्त्वादि गुणकमात्मानमुपास्से तथा यदि अन्योपि कोपि करिष्यति तदा सोपि त्वमिव अन्नं प्रदीप्ताग्निरत्ति प्रियं पुत्रादिकं पश्यति । अस्य कुले ब्रह्मवर्चसं भवति य एतमात्मानं वैश्वानरमुपास्ते । अन्योप्युपासकोऽन्नभक्षण प्रिय दर्शन ब्रह्मवर्चसुशाली संतानवान् भवतीत्यर्थः । ( मूर्धात्वेष इत्यादि )। हे औपमन्यवः त्वया वैश्वानर बुद्ध्या उपास्यमान एष द्युलोकः आत्मनो वैश्वानरस्यावयविनः मूर्धा

त्वेष आत्मन इति होवाच मूर्धाते व्यपतिष्य द्यन्मां नाऽऽ-
गमिष्य इति ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

## अथ पञ्चमाध्यायः त्रयोदशः खण्डः ।

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इति । आदित्यमेव भगवो राजन्निति

अवयवलक्षणः । न तु द्युलोक एव वैश्वानरात्मा । इति एवं रूपेण राजातमुवाच । मूर्धा ते व्यपतिष्यत यन्मां नागमिष्य इति । यदि त्वं वैश्वानरस्य निर्णयार्थं मत्समीपमनागमने वैश्वारस्य मूर्धरूपावयव भूते द्युलोके समस्तवैश्वानर बुद्धिंसम्पादयतस्ते तव मूर्धा शिरोभागो व्यपतिष्यत् विशीर्णोऽभविष्यत् । विपरीत विद्याबलादनर्थः स्यात् । यत् मां नागमिष्यः नागतोऽभविष्यः । अतः सम्यक्त्वयाकृतं यन्मत्सकाशमागतवानसीति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

—❀—

( अथेत्यादि ) पौलुषिं सत्ययज्ञं हो वाच राजा—हे प्राचीन योग्य सत्ययज्ञस्यैव नामान्तरमेतत् । कं त्वमात्मानमुपास्से इति पूर्ववत् । इतरः प्राह हे भगवन्! राजन् आदित्यमेव वैश्वानरमात्मानमुपास्से

होवाचैष वै विश्व रूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

प्रवृत्तो अश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वे तदात्मन इति होवाचाऽन्धोऽभविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
त्रयोदशः खण्डः ॥ १३ ॥

—❀—

इति । एष वै त्वयोपास्यमान आत्मा विश्वरूपो वैश्वानरः तत्र रूप्यते इति रूपम् । विश्वं समस्तं जगत्प्रकाश्यमस्य स विश्वरूप आदित्यः यद्वा शुक्ल नीलाद्यनेक रूपवत्वाद्विश्वरूपत्वमादित्यस्य । यद्वा सर्वरूपत्वाद् विश्वरूपत्वमादितस्या यस्मात्वैश्वानरस्य चक्षुरवयव भूतमादित्यं त्वमुपास्से तस्मात्तव कुले बहुविश्वरूपमिहामुत्रार्थमुपकरणजातं दृश्यते । यद्वाविश्वप्रकाशकं पुत्ररत्नादिकं दृश्यते इति ॥ १ ॥

( प्रवृत्त इत्यादि ) । अश्वतरी रथः अश्वतरीभ्यां युक्तो रथोऽश्वतरीरथः । त्वामनुप्रवृत्तः । तथा दासीनिष्कः दासीभिर्युक्तो निष्कोहारस्त्वामनुप्रवृत्तः । अयमादित्यो वैश्वानरस्य चक्षुरवयवभूतः न तु स अवयवीरूपः । अतो यदि मत्समीप नागमिष्यस्तदा अन्धोऽभविष्य इत्यादिकं पूर्ववदेव ज्ञातव्यम् ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
त्रयोदशः खण्डः ॥ १३ ॥

# अथ पंचमाध्यायः चतुर्दशः खण्डः ।

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मान इति होवाच प्राणस्त उदक्रमिस्यद्यन्मां नागमिष्य इति ॥ २ ॥

## इति छान्दोग्योपनिषद पंचमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

अथानन्तरं राजा इन्द्रद्युम्नं भाल्लवेयं प्रोवाच—हे वैयाघ्र पद्य ! व्याघ्रपद्यस्यापत्यं वैयाघ्र पद्यकं त्वमात्मानमुपास्से इति । इतरः हे राजन् ! वायुमेवोपास्से । इतरः प्राह—एष वै पृथग् वर्त्मा वैश्वानरः पृथक् नाना वर्त्मानि यस्य स पृथग् वर्त्मा । अनेक प्रकारकगतिमत्वाद् वायोः पृथग्वर्त्मा इति नाम भवति । यस्मात्त्वमेवं विधं वायूवयकं वैश्वारमुपास्ते तस्मात्कारणात्पृथक् नानादिगस्था वस्त्रान्नादि लक्षणावलयस्त्वामायान्ति आगच्छन्ति । पृथग् रथ श्रेणयोऽनुयंति आगच्छन्तीत्यर्थः । अन्यत्सर्वं पूर्ववदेव व्याख्येयम् ॥ १ ॥

प्राणस्ते इत्यादि अयं वायुर्वैश्वानरस्यावयवभूतः अतोऽवयवमात्रस्यावयवित्वेनोपासनात् प्राण एव तवध्वपगतोऽभविष्यत् यदि त्वं निर्णयाय मत्समीपनागमिष्य इति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य चतुर्दशः खण्डः॥ १४॥

# अथ पंचमाध्यायः पंचदशः खण्डः ।

अथ होवाच जनं शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्यद्यन्मा नागमिष्य इति ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
पञ्चदशः खण्डः ॥ १५ ॥

(अथ होवाचेत्यादि) पूर्ववदेव व्याख्येयम् ( एष वै बहुल इत्यादि ) । आकाशस्य बहुलत्वं सर्वगतत्वाद् भूतान्तरापेक्षयामहत्वाच्च ( तस्मात्त्वमित्यादि) । यस्मात्त्वं बहुलमाकाशात्मक वैश्वारानरावयवभूतमुपास्ते तस्मादेव कारणात् प्रजया पुत्र पौत्रादि लक्षणया सुवर्णादिना दानेन च त्वमपि बहुलः सम्पन्नोऽसि ॥ १ ॥

( सन्देह इत्यादि ) । एष आकाश आत्मनो वैश्वानरस्य सन्देहः शरीरस्यमध्यमो भागो मध्यकाय इत्यर्थः । अत्र दिहधातुरूपचयार्थकः अतः सन्देहो मध्मकायः । स च पूर्वापरशरीरयोः कुत्रानुप्रविष्ट इति संदिह्यमानत्वात् सन्देह इत्युच्यते । ते तव सन्देहो मध्यभागो व्यशीर्यत् छिन्नोऽभविष्यत् यदि त्वं निश्चयार्थं नागमिष्यः । अतः सम्यक् भवता कृतं यदागत इति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य पञ्चदशः खण्डः ॥१५॥

## अथ पंचमाध्यायः षोडशः खण्डः ।

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं रयिमान्पुष्टिमानसि ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति छान्दोग्योपनिषद् पञ्चमाध्यायस्य
षोडशः खण्डः ॥ १६ ॥

—❀—

( अथ हो वाचेत्यादि ) प्रकरणं पूर्ववदेव व्याख्येयम् । अप इति जलानि जलस्यैव वैश्वानर बुद्ध्या उपासनां करोमीत्यर्थः । जलस्य वेगाधिक्याद्रयीति नाम भवति । एष वै रयिरात्मा वैश्वानरो धनात्मकः जलेन धान्यादिकं जायते ततस्तत्संचयादेव धनं भवतीति यस्मात्त्वं रयिलक्षणं वैश्वानरावयवभूतमुपास्से । तस्मात्त्वं रयिमान् धनवानसि पुष्टिमानसि शरीरेण पुष्टोसि अन्नधननिमित्तत्वात् ॥ १ ॥

एतज्जलं वैश्वानरस्यात्मनो वस्तिर्मूत्रस्थानलक्षणम् । यदि त्वं मत्सकाशं नागमिष्यस्तदा त मूत्रस्थानं विशीर्णमभविष्यदिति ॥ २ ॥

इतिछान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
षोडशः खण्डः ॥ १६ ॥

# अथ पंचमाध्यायः सप्तदशः खण्डः ।

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

—❀—

अथेत्यादि पूर्ववदेव व्याख्येयम् । प्रश्नानन्तरं गौतमः प्राह—पृथिव्या उपासनं करोमि । राजा प्राह—एष वै प्रतिष्ठा पृथिवी वैश्वानरस्य पादौ । सकलप्राणिनामाधारत्वात् पृथिवी सर्वस्य प्रतिष्ठा । यतः प्रतिलक्षणायाः पृथिव्या उपासनाकरणात् त्वं सर्वत्र प्रतिष्ठितोऽसि ॥ १ ॥

यदि त्वं कदाचिद् वैश्वानरनिर्णयार्थं मत्समीपं नागतोऽभविष्यत् तदा तवपादौ शिथिलौ भवेताम् । अतः साधु कृतवानसीति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

—:❀:—

# अथ पञ्चमाध्यायः अष्टादशः खण्डः ।

तान्होवाच । एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो

अथ स राजा तान् महर्षीन् मिलितान् प्रति उवाच—एते खलु यूयं भगवन्तः अपृथग्भूतमप्यात्मानं पृथगिव विद्वांसः भिन्न भिन्न रूपेणोपासनां कुर्वन्तः तादृशोपासनाबलात् अन्नं विलक्षणं लौकिकं भोगमनुभवथः । प्रियपुत्रादिकं च पश्यथ । यस्त्वेतमेव द्युमूर्धादि विशिष्टम् अभिविमानं सर्वत्राभिव्याप्ततयाविगतमानं सर्वाभिमानरहितं वैश्वानरं सर्वप्राणिनां नेतारम् प्रादेशमात्रम् द्युलोकादि प्रदेशैः परिच्छिन्नं य उपास्ते स तादृशोपासकः सर्वलोकसर्वभूतसर्वात्मनि विद्यमानं परमात्मलक्षणमन्नम् अत्ति अनुभवति । इति ॥ १ ॥

प्राण द्याहुत्यधिकरणतया त्रिप्रकारकाग्नित्वेन च परिकल्पित जाठराग्निशरीरको द्युमूर्धत्वादिविशिष्ट आत्मातद्भाविते स्वकीयशरीरे प्रदीपमान प्राणापानाद्याहुतिभिर्वैश्वानरविद्योपासकेन परं ब्रह्माराधनीयमिति प्रतिपादयितुमाह—( तस्येत्यादि )। तस्य ह वा एतस्य प्रकृतस्यात्मनो मूर्धैव सुतेजाः उपासकस्य मूर्धैव परमात्ममूर्धभूताद्यौरित्यर्थः । चक्षुर्विश्वरूप आदित्यः प्राणः पृथग्वर्त्मावायुः सन्देहो बहुल उपासकस्य मध्यकाय एव परमात्ममध्यकायभूताकाशो वस्तिरेव रयिः उपासकस्य वस्तिरेव परमात्मावयवभूता आपोजलानीत्यर्थः । पृथिव्येवपादौ उपासकस्य पादावेव

वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
अष्टादशः खण्डः ॥ १८ ॥

—❀—

## अथ पञ्चमाध्यायः एकोनविंशः खण्डः ।

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं**

परमात्मपादलक्षणापृथिवी । उर एव वेदिः । अस्य खलु वैश्वानरस्यात्तुः उर एव वेदिराकारसाधर्म्यात् । लोमानि बर्हि यथावेद्यां कुशा आस्तीर्णा भवंति तथा उरसिलोमानि आस्तीर्णानीव दृश्यन्ते । हृदयंगार्हपत्यः अत एवान्वाहार्य पचनोऽग्निर्मनः आस्यमाहवनीयः आस्यं मुखम् आहवनीय इवाहवनीयः हूयते अस्मिन्निति व्युत्पत्तेः । एवं प्रकारेणोपासकः स्वशरीरे लोकत्रयशरीरं परमात्मानं वैश्वानरं संनिहितमिव ज्ञात्वा स्वसम्बद्धानि उरो लोमहृदयमन आस्यानि प्राणहवनाधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिगार्हपत्यान्वाहार्य पचनाहवनीयान् अग्निहोत्र हवनोपकरणलक्षणान् कल्पयित्वा प्राणाद्याहुतेश्चाग्निहोत्रत्वं च कल्पयित्वा एवं प्रकारकेण प्राणाग्निहोत्रेण वैश्वानरं परमात्मानं सम्यगाराधयेदिति भावः ॥ २ ।

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
अष्टादशः खण्डः ॥ १८ ॥

—❀—

( तद्यद्भक्तमित्यादि ) । तत्तस्योपासकस्य पुरुषस्य यद्भक्त मोदनादिकं

जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यात्याहित्य-स्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चाऽऽदित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
एकोनविंश खण्डः ॥ १६ ॥

—❀—

भोजनावसरे प्रथमम् प्रथमत आगच्छेत् समुपस्थितं भवेत् तदन्नं होमीयं होमसाधनं द्रव्यरूपेण । तेनौदनादिनाप्राणाग्नौ हवनं कुर्यात् सहोतायां प्रथमाहुति जुहुयात् तां प्राणाय स्वाहेति मन्त्रेणाहुतिं प्रक्षिपेत् । प्राण-स्तृप्यति तया प्रथमया आहुत्या प्राणस्तृप्तो भवतीति ॥ १ ॥

प्राणेतृप्यतीत्यादि एवं क्रमेण प्राणतृप्तेरनन्तरं तद्द्वारा चक्षुरादयस्तृप्ता भवन्ति । तत आदित्यस्तृप्तो भवति ततद्यौस्तृप्याति ततो द्वयादित्याभ्याम-धिष्ठितं यत्किंचिद्वस्तुजातं तृप्तं भवति । तस्मिन्सर्वस्मिन् वस्तुनि तृप्ते सति तस्य तृप्ते रनुतृप्तेः अनन्तरं प्रजा पश्वादिद्वारा तादृशहवनकर्तापि तृप्तो भवति । ननु इमे चक्षुरादयोऽचेतनाः तत्कथं तेषां तृप्तिः संभवति ? अचेतनानां तृप्तेरभावादितिचेन्न प्राणचक्षुरादिपदानां तत्तदभिमानिदेवता-वाचकत्त्वेनोक्त दोषासम्भवादिति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
एकोनविंशः खण्डः ॥ १६ ॥

—❀—

## अथ पञ्चमाध्यायः विंशः खण्डः ।

अथ यां द्वितीयांजुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥

व्यानेतृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।२।

इतिछान्दोग्योपनिषद पञ्चमाध्यायस्य
विंशः खण्डः ॥ २० ॥

—❀—

## अथ पञ्चमाध्यायः एकविंशः खण्डः ।

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति छान्छोग्योपनिषद पंचमाध्यायस्य
एकविंशः खण्डः ॥ २१ ॥

# अथ पंचमाध्यायः द्वाविंशः खण्डः ।

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥

समाने तृप्यति मनस्तृप्यति मनसितृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति छान्दोग्योपनिषद पंचमाध्यायस्य
द्वाविंशः खण्डः ॥ २२ ॥

# अथ पञ्चमाध्यायः त्रयोविंशः खण्डः ।

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति त्वक्तृप्यति त्वचितृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाऽऽकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्ति तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
त्रयोविंशः खण्ड ॥ २३ ॥

अथयां द्वितीयां जुहुयादित्यारभ्य पंचमीं जुहुयादित्यन्तो ग्रन्थ सन्दर्भः प्रथमाहुतिव्याख्यानवदेव व्याख्येयो विशेषाभावादिति ।

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य २०-२१-२२-२३ खण्डः ।

# अथ पञ्चमाध्यायः चतुर्विंशः खण्डः ।

स य इदमविद्वानग्निहोत्रंजुहोति । यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोतितस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

यद्यथेषी कातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥३॥

( स य इत्यादि ) । स य उपासकः इदमविद्वान् इदमुरः प्रभृतीनामग्निहोत्र हवनं साधनताम् अजानन् अज्ञात्वा अग्निहोत्रं प्राणाग्निहोत्र हवनम् जुहोति प्रतिदिनं करोति अनु तिष्ठन्तीत्यर्थः ( यथेत्यादि ) यथा अंगारानपोह्यः समिद्धं ज्वलितमग्निं परित्यज्य भस्मनि जुहुयात् तादृक्तत्स्याद् समिद्धतमे अग्नौ जुहुयादिति विधानं तत्र यदि कोऽपि ज्वलिताग्नौ आहुतिमदत्वा भस्मनि आहुतिं तादृशाहुतिदानमनर्थकं तथैवात्रापि उरः प्रभृतीन् साधनमज्ञात्वा प्राणाहुतिं संपादयेत्तदा तदग्निहोत्रं व्यर्थमेवेतिभावः ॥ १ ॥

( अथ य एतदेवमित्यादि ) । य उपासक एतत् एवम् उरः प्रभृतीनाम् अग्निहोत्रोपकरणवेद्यादिरूपतां विद्वान् जानन् अग्निहोत्रं प्राणाग्निहोत्रं जुहोति—अनुतिष्ठति तस्य प्राणाग्निहोत्रकर्तुः सर्वेषु लोकादिषु हुतं भवति सर्वस्वरूपभगवत आराधनेन सर्वं लोकाद्यात्मान्तमाराधितं भवतीति प्राणाग्निहोत्रस्योत्कृष्टत्वं ज्ञापितं भवतीति ॥ २ ॥

तद् यथा इषीकतूल तृणविशेषमुञ्जवर्तितूलम् अग्नौ प्रोतं प्रक्षिप्तं सत् प्रदूयेत झटिति विनष्टं भवति । एवमेव हास्याग्निहोत्रकर्तुः सर्वे पाप्मानः प्रदूयन्ते विनश्यन्ति पूर्वोक्तविद्यापूर्वक प्राणग्निहोत्रकरणेन सर्वं

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यादिति ॥ ४ ॥

तदेष श्लोकः—यथेह क्षुधिता बाला मातरं पर्युपासते एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति॥५॥

इति छान्दोग्योपनिषद पञ्चमाध्यायस्य
चतुर्विंशः खण्डः ॥ २४ ॥

इति छान्दोग्योपनिषदः पञ्चमाध्यायः ॥ ५ ॥

पापकर्म सत्वरं विनष्टं भवतीत्यर्थः। यद्यपि सर्वपापप्रदाहो ब्रह्मोपासनस्यफलं तथापि प्राणाग्निहोत्रे तादृशफलकथनमंगिफलेनांगस्यस्तुतिमेव दर्शयति। एतेन फलकथनेन प्राणाग्निहोत्रस्य वैश्वानरविद्याङ्गत्वं ज्ञापितमिति ॥ ३ ॥

(तस्मादुहेत्यादि)। यद्यपि चण्डालाय जात्या नीचायोच्छिष्टदानं न धर्माय तथापि सर्वभूतात्मकवैश्वानरोऽन्नं प्रक्षिपामीति बुद्ध्यानुष्ठितत्वात्तादृशं प्रदानं नाधर्माय भवतीति मुकुलितार्थः। तदेष श्लोकः यथोक्तप्राणाग्निहोत्रविषये एषः श्लोकः श्रुतो भवतीति भावः ॥ ४ ॥

(यथेहेत्यादि)। यथा येन प्रकारेण क्षुधिताः क्षुधयापीडिताबालाः मातरं स्वजननीम् पर्युपासते परिसर्वत उपासते। कदा मे माता अन्नं दास्यतीति कृत्वा एवं तथैव सर्वाणि भूतानि प्राणाग्निहोत्रमुपासते। विदुषः प्राणाग्निहोत्रस्तुतये अयंश्लोक इति। द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयतीति ॥५॥

इति छान्दोग्योपनिषद आनन्दभाष्ये पञ्चमाध्यायस्य
चतुर्विंशः खण्डः ॥ २४ ॥

इति श्रीमद् भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायाः
छान्दोग्योपनिषदः पञ्चमाध्यायः समाप्तः ॥ ५ ॥

—:❀:—

श्रियः श्रियै नमः ।

अथ श्रीमद्भगवद्रामानन्दाचार्यकृतानन्द भाष्यभूषितायाः

# छान्दोग्योपनिषदः

## षष्ठाध्यायः प्रथमः खण्डः ।

श्वेतकेतुर्हाऽऽरुणेय आस । तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥

पुत्राय श्वेतकेतवे ब्रह्मविद्यामुपदेष्टुमाख्यायिकामवतारयति ( श्वेतकेतुरित्यादि ) पुरा किलासीद् अरुणस्य पुत्र उद्दालको ऋषिः तस्य पुत्रः श्वेतकेतुर्बभूव । सचानधीयान एव बभूव तं ब्रह्मविद्यामुपदेष्टुमाह तदेव दर्शयिति—श्वेतकेतुर्नामत आरुणेयोऽरुणस्य पौत्रो ब्राह्मणो बभूव । तं श्वेतकेतुं पुत्रं पिता तस्य जनक उद्दालक उवाच प्रोक्तवान्, हे पुत्र ! श्वेतकेतो ! ब्रह्मचर्यं वस उपनयनादिकं कारयित्वा गुरुकुले विद्याप्राप्त्यर्थं निवासं कुरु, हे पुत्र ! सोम्य ! प्रियदर्शन ! मत्कुले समुत्पन्नो ननूच्यानधीत्य ब्रह्म बन्धुरिव न भवति । अर्थात् यः स्वयमब्राह्मणः ब्राह्मणं बन्धुत्वेन व्यपदिशति स ब्रह्मबन्धुरेतादृशो न भवति कोऽपि । यद्यपि गर्भाष्टमे वर्षे ब्राह्मणस्योपनयन संस्कारो गुणवतः पितुः सत्वे आवश्यक एव तथापि प्रवासादि कारणेन समये उपनयनाभावो ज्ञातव्य इति ॥ १ ॥

**स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय । तं ह पितोवाच ॥ २ ॥**

**श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं**

( स ह द्वादश वर्ष इत्यादि ) । स ह श्वेतकेतुः द्वादशवर्षः द्वादश वर्ष वयस्कः सन् उपेत्य गुरुकुलं प्राप्योपनयनादिकं कारयित्वा तदनन्तरं सर्वान्वेदान्सांगान्सरहस्यान् अधीत्य वेदाध्ययनं कृत्वा अनूचानमानी अनूचानं सांगवेदाध्यायिनमात्मानं मन्यते यः स अनूचानमानी स्तब्धः ज्ञानार्जनादिव्यापारशून्यः परिपूर्ण इव तृणीकृत जगत्त्रय इत्यर्थः । चतुर्विंशति वर्षः चतुर्विंशति वर्षयुक्त एयाय गुरुकुलात्स्वगृहं प्रत्यागतः । तमेवं भूतं ब्रह्मज्ञान रहितं पुत्रं दृष्ट्वा पिता आरुणिरुवाच प्रोक्तवान् सन्मार्गनयनेच्छयेति ॥ २ ॥

किमुवाच पिता पुत्रं तदाह ( श्वेतकेतो इत्यादि ) हे श्वेतकेतो ! प्रियदर्शन यत् यस्मात्कारणात् इदं महामनास्तब्धोऽसि परमपुषार्थ प्रयोजकव्यापारशून्योऽसि त्वमतिशयमुपाध्यादवाप्तवानसि स्वकीयपुत्रस्य केवल शास्त्राभ्यासं ब्रह्मज्ञानराहित्यं ज्ञात्वा उद्दालकः जगदभिन्ननिमित्तोपादानभूत ब्रह्मज्ञानवानेव नान्य पूर्ण इति पुत्राय ज्ञापयित्वा पूर्णताभिमानं तदीयं निराकृत्य ब्रह्मणि जिज्ञासामुपपादयितुं तदुद्धारेच्छया पुत्रं पृच्छति ( उत तमादेशमित्यादि )। उत तमादेशमप्राक्ष्यः—हे पुत्र ! उपाध्यायात् केवलं शास्त्राध्ययनमेव कृतवान्, उत तमादेशमप्राक्ष्यः । येन खलु ब्रह्मादिश्यते तमपि पृष्टवानसि । तमेवादेशं विश्लिष्य दर्शयति येनाश्रुतमित्यादि । येनादेशेन श्रुतेन अश्रुतमप्यन्यत् श्रुतं श्रुतमिव भवति अविज्ञातमनिश्चितमपि विज्ञातमिव निश्चितमिव भवति । सर्वान्वेदानधीत्य सर्वमन्यद्वेद्यं ज्ञात्वापि तावत् स

**मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥**

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्**

अकृतार्थं एव भवति। यावत्पर्यंतमात्मतत्वं न जानातीति प्रकरणतोऽवगम्यते। अत्र खलु विज्ञात शब्दो निदिध्यासन परकः। श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति क्रमदर्शनात्। अत्र च येनाश्रुतं श्रुतं भवतीत्यनेनोपादानस्य प्रश्नः प्रशासित्वार्थकादेश शब्देन परमात्मस्वरूपं पृष्टं भवति ततश्चात्मभूतमुपादानं किमिति प्रश्नस्य फलितार्थः। अतएव यन्मयं च जगत् ब्रह्मन्यतश्चैतच्चराचरमिति पुराणश्लोके यन्मयमित्यादिना आत्मस्वरूपस्य प्रश्नः, यतश्चैतच्चराचरमित्यनेनोपादानस्य प्रश्नः कृतो भवति, अत एव सन्मूलाः सोम्य इमाः प्रजा सदायतनाः सत्प्रतिष्ठाः इत्यादि इदमपि प्रतिवचने सदायतना इत्यनेन सत आत्मत्वं प्रतिपादितं तथा सन्मूलाः सत्प्रहिष्ठा इत्यनेनोपादानस्य प्रतिपादनं कृतमिति भावः। नहि घटे विज्ञाते पटादिकं विज्ञायते असम्भवात्। तद्वत् एक विज्ञानेन सर्वं विज्ञानासम्भवं मन्वानः श्वेतकेतुः प्रश्नप्रतिकथं स इत्यादि। कथं नु भगवः स आदेश इति। हे भगवो भगवन् स ईदृश आदेशः कथं केन प्रकारेण सम्भवतीति ॥ ३ ॥

यथा उपादाने मृत्पिण्डे विज्ञाते उपादेयघटादिकं ततो जातं सर्वं विज्ञातं भवति। तत्र कार्यकारणयोस्तादात्म्यात्। यत्रचोपादानोपादेयभावो भवति तत्रैवेदृश आदेशो भवतीत्यभिप्रायेण प्रतिवचनं ददाति (यथा सोम्येत्यादि)। हे सोम्य! यथा येन प्रकारेण लोके एकेन मृत्पिण्डेन घटाद्युपादानभूतेन सर्वं मृन्मयं मृदभिन्नं घटादिविकारजातं विज्ञातं भवति, एकस्मिन् उपादानभूते मृत्पिण्डे ज्ञायमाने तदुपादेयघटशरावादिकं विज्ञातं भवति तद्वदिहापि सर्वकारणीभूते परब्रह्मणि विज्ञाते तदुपादेयभूतं जगद्वि-

**वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥**

ज्ञातमेवभवतीत्यर्थः। ननु नैयायिकादि मते असदेव घटादिकं कार्यं कारणेन मृत्पिंडादिना जायते ततश्चोपादानोपादेययोर्भेदात् न कारणे ज्ञाते कार्यं विज्ञातंस्यादित्याशंकायामाह ( वाचेत्यादि )। वाचारम्भणं विकारः घटादिरूपो विकारो घटादिनामधेयञ्च आरभ्यते। आलभ्यते स्पृश्यते इति आरम्भणम्। कर्मणि ल्युट्प्रत्ययः। मृत्तिकात्मकद्रव्येण घटशरावादिरूपो विकारो घटादिनाम च स्पृश्यत इति भावः। अत्र वाक्शब्दो लक्षणया वागादिव्यवहारपरः, तृतीया च प्रयोजनस्य हेतुत्व विवक्षया ततश्च वाक्पूर्वक हानोपादानादि व्यवहारसम्पादनाय मृत्पिंडेन नामरूपयोः स्पर्शो भवति। अर्थात् मृत्पिंड एव घटादिनामरूप व्यवहारभाग्भवति। कार्यकारणयोरेक द्रव्यत्वे युक्तिमाह मृत्तिकेत्येवसत्यम्, मृद्विकारभूतं घटादिकं मृत्तिकेत्येव प्रमाणप्रतिपन्नं न तु मृत्तिकयाभिन्नो घटादिः, अथवा मृन्मयं मृत्तिकेति वाक्यमेव सत्यमवाधितार्थकम्। एवं च कार्यकारणयोर-भेदात् कारणे ज्ञाते तदभिन्नं कार्यं ज्ञातमेव भवतीति। विकारो वाचारम्भणं वागालंवनमात्रं नामधेयं स्वार्थे धेयप्रत्ययः नामैव केवलम्, न विकारो नाम वस्तु अस्ति मृत्तिकैव सत्यमिति तन्न युक्तियुक्तम्। यतो वाचारम्भणशब्दस्य वागालंबनमित्यर्थकत्वे प्रमाणाभावात्। तथा नामधेयं वागालंवनमित्यनयोरेकार्थकत्वेन पुनरुक्तिदोषोऽपि भवति। किंच येनाश्रुतं श्रुतं भवतीति। प्रकरणमप्यसंगतमेव भवति यथा—शुक्तिकातत्वेज्ञाते शुक्तिकाध्यस्तरजतस्य निवृत्तावपि रजतत्वे ज्ञातत्वादर्शनात् तथैव ब्रह्मणि ज्ञाते ब्रह्माध्यस्तप्रपंचस्य निवृत्तिं सम्भवेऽपि प्रपंचस्य ज्ञातत्वासम्भवात्। न चाधिष्ठानातिरिक्तारोपितसत्ताया अभावेन शुक्तितत्वे ज्ञाते रजतत्वं ज्ञातमेव। एवं ब्रह्मज्ञाने जाते प्रपंचस्यापि तत्वं ज्ञातमेवेति वाच्यं। पारमार्थिक शुक्तिकादि व्यक्तेरपारमार्थिक रजतादितत्व रूपत्वास-म्भवात्। एवं शुक्तितत्वे ज्ञाते रजततत्वं ज्ञातमिति लोकव्यवहारोऽपि

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥५॥

यथा सोम्यैकेन नख निकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं कृष्णाय-समित्येव सत्यम् । एवं सोम्य स आदेशो भवतीति ॥ ६ ॥

न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवांस्त्वेव मे तद्ब्रवीत्विति तथा

न दृश्यते । तस्मात् प्रकरणासंगतिर्भवत्यवैकान्ताद्वैतवादिनामिति संक्षेपः ॥ ४ ॥

( यथेत्यादि ) । यथा खलु सोम्य एकेन लोहमणिना सुवर्णपिण्डेन ज्ञातेन सर्वं लोहमयं कटककुंडलादिकं विज्ञातं स्यात् भवेत् । अन्यत्सर्वं पूर्ववदेवेति ॥ ५ ॥

यथा वा सोम्य ! एकेन नखनिकृन्तनेन लोहपिंडेन ज्ञातेन सर्वं तद्विकारभूतं असिपरश्वादिकं विज्ञातं भवेदित्यादिकं सर्वं पूर्ववदेवेति । एवं यथोक्त प्रकारेण स आदेशो मया प्रतिपादित मृत्पिण्डादितुल्यो भवतीति ॥ ६ ॥

एवं क्रमेण पित्रा प्रतिपादिते पुत्रः प्राह ( न वैइत्यादि ) । हे पितः ! ते भगवन्तो ममोपाध्यायाः एतत्परमात्मस्वरूपं नवैअवेदिषुर्नैव ज्ञातवन्तः, यद्धि ते मम गुरवो ह्येतद् अवेदिष्यन् जानीयुस्तदा गुणवते भक्ताय सुश्रूषवे शिष्याय कथं नावक्ष्यन् । यदि तेषामेतत् स्वरूपज्ञानं भवेत् तदा अवश्यमेव तदुपदेशं मह्यं कुर्युः, यद्यपि गुरोर्न्यूनता न वक्तव्येति व्यवस्था तथापि पुनरपि मां गुरुकुलं प्रेषयिष्यतीति भयात्कथयित्वा भगवांस्त्वेवमे-तद्ब्रवीतु, भगवन्त एव तद्वस्तु मह्यमुपदिशन्तु इति पितरं प्रार्थमामास,

सोम्येति होवाच ॥ ७ ॥

इति छान्दोग्योपनिषदः षष्ठाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

—❀—

## अथ षष्ठाध्यायः द्वितीयः खण्डः ।

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक

तथा सोम्येति होवाच । हे सोम्य ! तत्तथैव प्रतिपादयिष्यामीति पिता प्रोवाचेति ॥ ७ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

—❀—

एक विज्ञानेन सर्वं विज्ञातं भवतीति पूर्वं प्रतिज्ञातं तां प्रतिज्ञां समर्थयितुं विभक्तनामरूपस्य बहुत्वावस्थस्य जगतो ब्रह्मैककारणतां प्रतिपादयितुमयमुक्रमः । यथेहलोके अपराह्णे प्रसारितानां घटशरावादीनां मृत्पिंडैकोपादानतांप्रतिपादनेच्छोः पूर्वाह्णसमये एतत्घटशरावादिकं मृत्पिण्ड एवासीद् न पिण्डव्यातिरिक्तमन्यदासीदिति प्रतिपादयति, एवं जगदुत्पत्तेः पूर्वं सदेवासीत् न ततो व्यतिरिक्तं किंचनासीदिति प्रतिपादयति ( सदेवेत्यादि ) । हे सोम्य ! श्वेतकेतो ! इदं परिदृश्यमानं विभक्तनामरूपमनेकावस्थं घटपटादिजगत्, अग्रे सृष्टिकालात्पूर्वम् एकमेव अविभक्तनामरूपतया एकत्वावस्थापन्नमेव अद्वितीयं कर्तृत्वान्तरकारकरहितं सदेव सदाकारकप्रतीतिविषयतापन्नमेवासीत्, अत्र सच्छब्दः घटादिनामसंबन्ध

**आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसतः सज्जायत ॥ १ ॥**

योग्यतालक्षणं सत्वं शक्यतावच्छेदकीकृत्याखण्ड ब्रह्मांडनायके श्रीमति रामे परमात्मनि वर्तते । यद्यपि अयं सच्छब्दः विशेष्यलक्षणपरमात्मबोधकः तथापि कारणविषयत्वसामर्थ्यात् कारणता प्रयोजक गुणविशिष्ट प्रकृतिपुरुष कालशरीरकं परमात्मानमेव समुपस्थापयति । अत्र सदेवेत्येवकारेण नैयायिकमतं व्यवच्छिनत्ति । ते हि कार्योत्पत्तेः पूर्वं कार्यस्य घटादेरसत्व-मेवेच्छन्ति, न तु सत्वम् विद्यमानस्योत्पत्त्ययोगात् । उत्पत्तेः पूर्वमविद्यमानं जगत्कारणव्यापारादनन्तरं जायते यदि सदेव स्यात्तदाकारकव्यापारोऽनर्थक एव भवेत् । तन्मतं निराकृतं भवति प्रकृते नैवकारेण एतत्तत्वम् असदे-वेदमग्रे आसीदित्यसत्कार्यवादि दर्शन प्रतिक्षेपपरकोत्तर वाक्यप्रकरणान्नि-र्णीयते । एकमेवात्रत्यैवकारेण । बहुस्यामित्यादिना वक्ष्यमाणाया सृज्य मानानां बहुत्वावस्था निराक्रियते । एवं तदैक्षत तत्तेजोऽसृजत् इत्याद्यग्रिमप्रकरणे सच्छब्दवाच्यस्य निमित्तकारणता प्रतिपादनेन । अद्वितीयमिति पदेन निमित्तान्तरस्य निषेधः क्रियते । यथाघटादिकार्ये उपादानं मृत्तिकाकर्तृकारणं कुलालादिकं मृद्भिन्नम् । न तथा प्रकृते उपादानमन्यत् निमित्तकारणं तु अन्यद् । इति निमित्तान्तरस्य निराकरणं भवति । ततश्च एकमद्वितीयमिति पदाभ्यामभिन्ननिमित्तोपादानकत्वं सिद्ध्यति । तदयं निर्गलितोर्थः । इदं प्रत्यक्षादिप्रमाणेन परिदृश्यमानं जगद् विभक्त-नामरूपं बहुत्वावस्थम् सृष्टेः पूर्वनिमित्तान्तररहितम् अविभक्तनामरूपतया एकं सच्छब्दशब्दितं ब्रह्मलक्षणमेवाभवदिति । यद्यपि जगद् इदानीमपि सदेव पूर्वमपि सदेव तथापि सृष्टेरनन्तरं विभक्तनामरूपतयासत् उत्पत्तेः पूर्वन्तु अविभक्तनामरूपतया सत्वम् । एतावानेव विशेषः । ये तु एकमेवाद्वितीयमिति वेदवाक्यं जगतो मिथ्यात्वे प्रमापयन्ति ते भ्रान्ताः यतो यदि एकमेवे-

**कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः**

स्यादिवाक्यं मिथ्यात्वमवबोधयेत्तदा सदेव सोम्येदमग्रे आसीदिति वाक्यघटककालप्रापकाग्रपदेन तथा तदैक्षतनामरूपे व्याकरवाणि इति ईक्षण नामरूपप्रतिपादकोत्तरवाक्येन विरोधप्रसंगादिति।

सदेवासीदित्यादिनासृष्टेः पूर्वकाले सृज्यमानप्रपंचस्य ब्रह्मणाऽभेद प्रतिपादनद्वारेण सत्कार्यवादं व्यवस्थाप्य सत्कार्यवाद विरोधिनमसत्कार्य-वादं नैयायिकाद्यभिमतं वाचारंभणमित्यादिना पूर्वं निराकृतम्। इदानीं कण्ठतोऽसत्कार्यवादं निराकर्तुमसत्कार्यवादिमतं दर्शयति (तद्धैकइत्यादि)। तस्मिन्कारणविषये एके नैयायिकादय आहुः प्रतिपादयन्ति इदं विभक्त-नामरूपावस्थं जगद् अग्रे उत्पत्तेः पूर्वम् असदेवासीत् नतु सदेवासीत्। ननु यथेदमिदानीं जगद् नामरूपाभ्यां विभक्तं तथोत्पत्तेः प्राग् नासीदिति नामरूपविभागाभावात्मका सत्वं सिद्धान्तसिद्धमेव तत्राह—एकमेवाद्विती-यम्। विहाय प्रागभावम् अवस्थाया अवस्थाश्रयस्य धर्मिणः कस्यापि सत्वमुत्पत्तेः प्राग् नास्तीति। यद्वा असदेवेति वाक्य सदेवासीदित्यस्य प्रतिक्षेपकमात्रम्। तस्मादित्यादि, तस्माद् असत एव कारणात् सत् प्रागभाव प्रतियोगिकार्यमजायत समुत्पन्नोऽभवत्, अथवा सदिति भाव प्रधानो निर्देशः सत्तेत्यर्थः,'यस्मात्कारणाद् उत्पत्तेः पूर्वमवस्थाश्रयस्याप्यभावः तस्मात्कारणात्सत्वलक्षणोत्पत्तिरजायताभवदिति ॥ १ ॥

एवं क्रमेणासत्कार्यवाद पक्षमुपपाद्य तन्मतं दूषयितुमाह ( कुतस्तु खलु इत्यादि )। कुतः कस्मात्प्रमाणाद् असतः सकाशादुत्पत्तिः पदा-र्थानां प्रतीयेत। स एवायं घट इत्यादि प्रत्यभिज्ञा विरोधाद् असदुत्पत्ति प्रमाणस्यानवतारात्, तस्मादसतो न सत्वम् सत एव पदार्थस्यावस्थान्तर सम्बन्ध एवोत्पत्तिरिति। एवं प्रकारेण परमतं निराकृत्य स्वमतं दर्शयति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, इति। अयं भावः असतः सज्जायत इत्यत्र नास्ति कश्चिद् दृष्टान्तः, यद्यपि बीज मृत्पिण्डादीनां

**सञ्जायेतेति। सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥२॥**

स्वाकार निवृत्यनन्तरमेवांकुर घटादीनामुत्पत्तिस्तस्मात् जायते तथापि बीजादीनां विनाशो न तत्रांकुरोत्पत्तौ कारणमपितु ये बीजावयवास्त एव तत्रहेतवो भवन्ति। कार्यान्वयिनामेव कारणत्वात्; अतएव तिलेभ्य एव तैलस्योत्पत्तिर्भवति न तु सिकताभ्यः। यदभावादेव भावः स्यात्तदा अभावस्य सर्वत्र सुलभत्वात्सर्वं कार्यं सर्वस्मात्स्थानतोहि घटार्थी घटार्थं नियमतो मृतिका संचये व्याप्रियेत, व्याप्रियमाणश्च सर्वोऽपि दृश्यते तस्माद् नाभावात्भावोत्पत्तिः किंतु सत एव सदुत्पत्तिः। न च यदि सत एव सदुत्पत्तिः स्यात्तदा घटादपि घटान्तरमुत्पद्येत, नत्वेवं दृश्यते तस्मात् न भावाद्भावोत्पत्तिरिति एवं यदि कार्यं कारक व्यापारात्पूर्वमपि यदि मृत्तिकादौ भवेत् तदा घटोत्पादनाय कुलालादि कारक समुदायस्य व्यापारोऽपि निरर्थक एव भवेदिति वाच्यम्, भावानवबोधात् नहि विलक्षणं कार्यं कारणात्समुत्पन्नं भवति। किन्तु कारकव्यापारात्पूर्वं नामरूपात्मना व्याक्रियमाणं कार्यं कारक व्यापारादनन्तरमभिव्यक्तमेव भवति। यथा तिलेषु विद्यमानमेव तैलं कारक व्यापारेण निष्पीडनादिनाऽभिव्यक्तं भवति, यथा वा गवि विद्यमानमेव दुग्धमाविर्भवति वत्सचोषणेन। अतएव मृत्तिकया जायमानो घटो मृज्ज इति मार्दव इतिव्यवहारभाग् भवन्। मृदादि कारणे नान्वित एव भवति। सुवर्ण जातो घटः सौवर्ण इति व्यपदिश्यते। यदि कदाचिदभावाद् भावः स्यात्तदाऽभावान्वितमेव कार्यं भवेत्। न त्वेवं दृश्यते किंतु सर्वोपि भावान्वित एव प्रतीयते। अतएवोक्तं भगवता गीतायाम्—नासतो विद्यते भावो नाभावो विद्यते सतः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः इति। तस्मात्सतः परमात्मरूपकारककारणात् अविभक्तदशापन्नस्य कार्यस्योत्पत्तिर्भवति न तु असतः कारणात् कदाचिदपि कार्यस्योत्पत्तिर्भवतीति विस्तरशोऽन्यत्र द्रष्टव्य इति ॥ २ ॥

**तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत । तत्तेज ऐक्षत बहुस्यां प्रजायेयेति तदपोऽसृजत । तस्माद्यत्र क्वचन शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥**

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता**

( तदैक्षत इत्यदि ) । तत्सत् शब्दवाच्यं परब्रह्म ऐक्षत ईक्षणं सङ्कल्पं कृतवान् एकोप्यहम् बहुविचित्रानन्तजडचेतनमिलित व्यष्टिजगद्रूपेण बहु अनेकरूपः स्याम् प्रजायेय प्रकर्षेण जायेय । ततो यथोक्तरूपविचारकरणानन्तरं तत्प्रकृतं सत् शब्दवाच्यं परब्रह्मतेजः असृत तेजसः सृष्टिं कृतवान् तत्तेज ऐक्षत तेजः । तेजः शरीरकं ब्रह्म ऐक्षत ईक्षणं कृतवत् अन्यथा तेजः प्रभृतिनामचेतनानामीक्षण कर्तृत्वस्यासम्भवात् । अतस्तेजः प्रभृतिशब्दास्तेजः शरीरकपरमात्म बोधका एव । अतएव तत्रापि ईक्षणं संभवत्येवेति । बहुस्यां प्रजायेयेति पूर्ववत् । तदपो असृजत न च तत्तेज ऐक्षत इत्यत्र तेजः यदस्य तेजः शरीरक ब्रह्मपरत्वं यदि स्वीक्रियेत तदा तत्तजो असृत इत्यादिस्थलेऽपि तत्तच्छरीरक ब्रह्मण एव ग्रहणं स्यात् । न च तत्सम्भवति ब्रह्मणो जायमानत्वासम्भवात् । नहि नित्यस्य कदाचिदपि उत्पत्तिर्भवतीति वाच्यम् । तेजः शरीरक ब्रह्मणः कार्यत्वेन तस्य सृज्यत्वेऽपि दोषाभावात् । केवलस्य तस्याजन्यत्वेऽपि विशिष्टस्य जन्यत्वेऽदोषात् । यथा जन्मना जातोऽपि देवदत्तः प्रव्रज्या समये विशिष्ट रूपेण समुत्पन्न इति । तदनन्तरं तेजः शरीरक ब्रह्मणः सकाशाद् जल शरीकस्योत्पत्तिर्भवति । तेजसो जलकारणत्वे युक्तिमपि दर्शयति ( तस्मादित्यादि ) । तस्मात् यत्र क्वचन देशे काले वा पुरुषः शोचति आतपादिना तप्तो भवति । स्वेदते वा प्रस्विद्यते तदा तेजस एव आपो जलानि अधिजायन्ते समुत्पद्यन्ते ॥ ३ ॥

( ता आपऐक्षन्त ) । इत्यादि प्रकरणं पूर्ववदेव व्याख्यातव्यम् । ता

अन्नमसृजन्त । तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवति । अद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥

इति छान्दोग्योपनिषदः षष्ठाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

—❀—

## अथ षष्ठाध्यायः तृतीयः खण्डः ।

तेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

अन्नमसृजन्तः । अत्रान्नपदेन न व्रीहि यवादीनां ग्रहणम् । किन्तु तत्कारण पृथिव्या ग्रहणम् । महाभूताधिकारात् । अपामन्नहेतुत्वमुपपादयति (तस्मादित्यादि )। तस्माद् यस्मात्कारणाज्जलादन्नस्योत्पत्तिस्तस्मादेव कारणात् इदानीमपि यत्र क्वचन वर्षति । यत्रदेशे काले वा मेघो वर्षति । तदेव तत्रैव देशेकाले वा भूयिष्ठमन्नं भवति । अतिशयाधिकं व्रीहियवादिकं बाहुल्येन समुत्पद्यते । ( अद्भ्य एवेत्यादि ) यस्मात्कारणात्पृथिव्येकदेश भूत व्रीहि यवादीनामन्नानामुत्पत्तिर्वर्षणेन भवति तस्मात्कारणादेव अन्नादयम् अन्न प्रभृति पृथिवी जलेभ्य एवाधिजायते । जलादेवान्नस्यान्नकारण पृथिव्या अपि जनिर्जलादेवेति भावः ॥ ४ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

—❀—

सर्वस्यापि बीजे तस्य वस्तुनस्तेजोऽप् अन्नात्मक कारणजन्यत्वं दर्शयितुमाह ( तेषामित्यादि ) । तेषां खलुएषां जीवाविष्टानां भूतानां प्राणिनां

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥**

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति। सेयं देवते-**

पक्ष्यादीनां त्रीण्येव त्रित्व संख्याकान्येव नेतराणि बीजानि कारणानि भवन्ति सन्ति। आण्डजम् तत्राण्डाज्जातमण्डज मण्डजमेवाण्डजम्। पक्षिसर्पादिकम्। प्रत्यक्षसिद्धमेतेषामण्डजत्वम्। जीवजम् गर्भवेष्टन चर्मपुटकजरायुजम् पुरुष पश्वादिकम् उद्भिज्जम्, स्थावरादिकम्, उद्भिज्जेन स्वेदजस्यापि संग्रहो भवति ॥ १ ॥

( सेयंदेवतेत्यादि ) सेयं प्रकृता सत्शब्द शब्दिता परा देवता ऐक्षत ईक्षणं बहु भवन सङ्कल्पं कृतवता किं विचारितवती तत्राह ( हन्तेत्यादि )। हन्त अहं सदाख्या परादेवता तथा इमाः तेजोवन्न रूपास्तिस्रो देवताः, अनेन जीवेन जीवसमष्टि विशिष्टेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि देवासुरादि विचित्र सृष्टिं तेषां नामधेयानि वाचकनामादिकानि च करवाणि विस्पष्टां करवाणीति। स्व स्वाभिमानिदेवताधिष्ठितानि तेजोवन्नानि। तत्र तेजोवन्नाभिमानि देवता न परमात्मव्यतिरिक्ता, तासां परमात्मभिन्नत्वे प्रमाणाभावात्। परमात्मनश्च सर्वाभिमानिदेवत्वं सम्भवति सर्वेषां जडचेतनानां परमात्मशरीरत्वात्। एवं तदैक्षत अनेन सर्वज्ञत्वं प्रतिपादितम्। असृतेति पदेन निमित्तकारणत्वमावेदितं भवति। बहु स्यामित्यनेन तु उपादान कारणत्वं तदुभय कारणानुगतं सर्वं शक्तित्वं सत्यसंकल्पत्वं चावेदितं भवति। तथा अनेन जीवेनात्मनाऽनुप्रविश्येति वाक्येन सर्वान्तरत्वं चावेदितं भवति। जीवेनात्मना, जीवशरीरवतामयेत्यर्थः ॥ २

( सेयं देवतेत्यादि ) सेयं परा देवता तथा इमास्तिस्रो देवतास्तेजोवन्न लक्षणा अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे देवादि नामाभिधानं रूपं शरीरं च व्याकरोद् उत्पादयामास। तासां देवतानाम् एकामेकाम् त्रिवृतं

मास्तिस्रो देवता अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥

तासां त्रिवृतं त्रिवृतमेकैकामकरोत । यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥

इति छान्दोग्योपनिषदः षष्ठाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

—❀—

## अथ षष्ठाध्यायः चतुर्थः खण्डः ।

यदग्ने रोहितं रूपं तेजसस्तद्रूपम् । यच्छुक्लं तदपां

त्रिवृतमकरोत् नामरूपव्याकरणस्य त्रिवृत्करणाधीनत्वात् । प्रथमत एकैकस्या त्रिवृत्करणमेव कृतवतीः तत्र तेजोवन्न देवतासु एकैकां त्रिवृतं त्रिवृतं कृत्वा तदनन्तरं नामरूपयोर्व्याकरणमकरोदिति समुदितार्थः ॥ ३ ॥

कथमेतासां त्रिवृत्करणं भवतीति शिष्यजिज्ञासामालक्ष्याह ( यथातु इत्यादि ) । हे श्वेतकेतो ! यथा येन प्रकारेण इमास्तिस्त्रो देवता एकैका प्रातिस्विकरूपेण त्रिवृत् त्रिवृत् कृता भवति, तत्त्रिवृत्करण प्रकारं गदतो मे विजानीहि अवहितमनाः शृणु इत्यर्थः ॥ ४ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

—❀—

( यदग्ने इत्यादि ) अग्नेस्त्रिवृत्कृतस्य यत् रोहितं ईषद्रक्तमिव—रूपं स्वरूपं रोहितो भागो दृश्यते तत् रूपम् तेजसोऽत्रिवृत्कृतस्य तेजस एव

यत्कृष्णं तदन्नस्य । अपागादग्नेरग्नित्वम् । वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥

यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥

रूपम् तथा अग्नेस्त्रिवृत्कृतस्य यत् शुक्लं रूपं दृश्यते तत् अपामत्रिवृत् कृतानां रूपम् अग्नेः यत्कृष्णं रूपं दृश्यते तत् अन्नस्यात्रिवृत्कृतायाः पृथिव्याः स्वरूपम् इति जानीहि । ( अपागादग्नेरग्नित्वम् ) तेषु तेजोवन्ने अग्न्याद्यवस्थानाशक कारण सन्निधाने अग्नित्वावस्था अग्नेरपगता भवति अन्याचावस्था प्रादुर्भवति । ( वाचारम्भणमित्यादि ) अग्निरिति विकारः तेजोवन्नैरेवाग्नित्वालक्षणो विकारोऽग्न्यादि नामधेयं च वाकपूर्वक व्यवहार सिद्ध्यर्थं तेजोवन्नैरेव स्पृश्यते अतस्तेजोवन्न लक्षणान्नेवाग्निरिति सत्यम् । तेजोवन्न व्यतिरेकेणाग्नि बुद्धेर्नामधेयस्याभावात् । अयमाशयः त्रिवृत्करणानन्तरं यदयमग्निरिति व्यवहारो भवति तत् विकार मात्रं वस्तुतः सत्यन्त तत्र तेजोवन्नरूपमेव न तु तद्व्यतिरेकेणाग्निरितिकाचित्बुद्धि र्व्यवहारो वेति ॥ १ ॥

यदादित्यस्य सूर्यस्यत्रिवृत्कृतस्य यद् रोहितं रूपं स्वरूपं दृश्यते तत् रूपम् तेजसोऽत्रिवृत्कृतस्यैव रूपम् । एवं यत् शुक्लं रूपं दृश्यते सूर्ये तदपामत्रिवृत्कृतां तासामेव रूपं तथा यत् कृष्णं रूपं दृश्यते तदन्नस्या त्रिवृत्कृतायाः पृथिव्या एव रूपम् अपागादादित्यादादित्यत्वम् तेजोवन्नेषु सूर्याद्यवस्थानाशक कारण समवधाने सति आदित्यावस्था आदित्यादपगता भवति । अवस्थान्तरञ्च । तत्र प्रादुर्भवति । अतस्तेजोवन्नैरेवादित्यावस्था लक्षणो विकारो नामधेयञ्च वाक्पूर्वक व्यवहार सिद्ध्यर्थं तेजोवन्नैरेव स्पृष्टं भवति । अतस्तेजोवन्न लक्षणान्नेवादित्य इति सत्यम् । तेजोवन्न व्यतिरेकेणादित्यात्मक विकारस्य व्यवहारस्य चाभावादिति ॥ २ ॥

यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥

यद्विद्युतो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥

एतद्ध स्म वै तद्विद्वांस आहुः पूर्वे महाशाला महाश्रोत्रियाः । न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदांचक्रुः ॥ ५ ॥

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदां

एवं यच्चन्द्रमसो रोहितं रूपं यद्विद्युतो रोहितं रूपमिति मंत्रद्वय व्याख्यानमपि कर्तव्यम् । सर्वस्मिन्नपि वस्तु नियत रूपत्रयम् तत् अत्रिवृत्कृत तेजोवन्नानामेव रूपं न तु स्वतंत्रं कस्यापि किमपीत्यादिकमिति ॥ ३ ॥–॥ ४ ॥

( एतद्धस्मेत्यादि ) एतद्धस्मवै तत् कारणात् कार्यं न भिद्यते अर्थात् कारणादभिन्नं कार्यमिति विद्वांसो जानन्तः पूर्वे पूर्वकालिकाः महाशाला महाश्रोत्रियाः महागृहस्थाः सर्व वेदपारगा ब्राह्मणा आहुः वक्ष्यमाण प्रकारेण उक्तवन्तः । किं ते उक्तवन्तस्तत्राह (ननो इत्यादि) नः अस्माकं तेजोवन्नान्येव ज्ञातवतां कुले अद्य इदानीम् कश्चन कश्चिदपि एभ्यस्तेजोवन्नेभ्यः अतिरिक्तं अश्रुतं अमतमविज्ञातम् उदाहरिष्यति न कोऽपि तथा उदाहर्तुं शक्नोति ( विदांचक्रुः ) तेजोवन्नेभ्य एव सर्वं विकारजातं ज्ञातवन्तेति ॥ ५ ॥

सर्वस्यापि विकारजातस्य तेजोवन्नेष्वेवान्तर्भावंदर्शयितुमाह ( यदुरोहितमिवाभूदित्यादि ) यदुरोहितमिवाभूत्कपोतादि पक्षिरूपे

चक्रुर्यदु शुक्लमिवाभूदित्यपां रूपमिति तद्विद्वां चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विद्वां चक्रुः ॥ ६ ॥

यद्वविज्ञातमिवाभूदित्येतासामेव देवतानां समासइति तद्विद्वां चक्रुः । यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥

इति छान्दोग्योपनिषदः षष्ठाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

सन्दिह्यमाने यदुरोहितमिवाभूत् तदऽत्रिवृत्कृतस्य तेजस एव रूपमित्येवं क्रमेण ते महागृहस्थाः सर्व वेदपारङ्गा विदांचक्रुर्ज्ञातवन्तः । यच्च रूपं शुक्लमिवाभूत् तत् अत्रिवृत्कृतानामपामिति ते ज्ञातवन्तः तथा अन्य रूपेण संदिह्यमाने कपोतादिरूपे कृष्णमिवाभूत् । रूपंतदन्तस्यात्रिवृत् कृतायाः पृथिव्याः एवेति ते महाशालाविदां चक्रु र्ज्ञातवन्त इति ॥ ६ ॥

( यदु अविज्ञातमिवाभूत् ) यत् अत्यन्त दुर्लक्ष्यमविज्ञात प्रायमिवाभूत् । तत् सर्वमेतासामेतेजोवन्न देवतानां समासः समुदाय इति विदांचक्रु र्ज्ञानवन्त इति । एवं क्रमेण सर्वस्यापि बाह्य प्रपञ्चस्य त्रिवृत्कृततेजोवन्न स्वरूपत्वेनात्रिवृत्कृत्तेजोवन्न लक्षणादभेदं दर्शयित्वा आन्तरमांस शोणितादिं लक्षण शरीरस्य त्रिवृत्कृत तेजोवन्नैरभेदम् । इन्द्रियादीनां त्रिवृत्कृत्तेजोवन्नाप्यायितत्वं दर्शयितुमाह ( यथा तु खलु इत्यादि ) यथा येन प्रकारेण हे सोम्य । श्वेतकेतो ! इमास्तिस्रो देवताः तेजोवन्न लक्षणा पुरुषोपभुज्यमानाः पुरुषं प्राप्य देहाकारेण परिणामं प्राप्य एकैकाऽत्रिवृत् त्रिवृत्भवन्ति । त्रिधा त्रिधा परिणामं प्राप्नुवन्ति तत् ते विजानीहि । तादृशं परिणाम प्रकारं मत्तः शृणु इति ॥ ७ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

# अथ षष्ठाध्यायः पञ्चमः खण्डः ।

**अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ॥१॥**

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥ २ ॥**

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातु-**

( अन्नमित्यादि ) । अन्नमोदनादिकमशितं पुरुषेणोपभुज्यमानं जाठरवह्निना परिपच्यमानं त्रेधास्थविष्ठमध्यमाणिष्ठरूपेण त्रिप्रकारकं विधीयते । प्रकारत्रयेण विभक्तं भवतीत्यर्थः । तस्य पुरुषेण भुक्तस्याग्निना पच्यमानस्यान्नस्य यः स्थविष्ठः स्थूलोधातुः स्थूलतमो विकारः तत्पुरीषं विष्ठारूपतामापद्यते । यश्च मध्यमो धातुः तन्मांसं मांसाकारेण रसादिक्रमेण परिणमते । योऽणिष्ठस्तन्मनः यश्च भुक्तान्नस्याणिष्ठः सूक्ष्मोभागः स मनस आप्यायकत्व रूपेण भवति । न तु मनो रूपो भवति । मनसः आहंकारिकत्वेनान्नविकारत्वाभावात् । अतो मनसोऽन्न विकारत्वं यदन्येन प्रतिपादितं तन्निरस्तं वेदितव्यमिति ॥१॥ आपः पीतास्त्रेधा विधीयन्ते) । पुरुषेणपीतं जाठरवह्निना पाचितं त्रिप्रकारेण परिणमते तासां यः स्थविष्ठो भागस्तन्मूत्रम् । यो मध्यमो भागः तद्रसादिक्रमेण लोहितं भवति । भुक्तं जलं रसादिक्रमेण शोणिताकारेण परिणमते इत्यर्थः । योऽणिष्ठः स प्राणः । भुक्तजलस्य सूक्ष्मोंऽशः प्राणस्याप्यायको भवति न तु प्राणस्यजनको भवति । प्राणस्याहंकारिकत्वेन जलविकारत्वाभावादिति ॥ २ ॥

( तेजोऽशितमित्यादि ) । तेजोऽशितं त्रेधा भवति । अत्र तेजः शब्देन तैल घृतादिकं कथ्यते । तथा च भुक्तं तैल घृतादिकं प्रकारत्रयेण परिणमते

**स्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥**

**अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी**

तस्य यः स्थविष्ठो धातु स्तद्रसादिक्रमेणास्थि भवति । तदाकारेण परिणमत इत्यर्थः । यश्च मध्यमः स मज्जा भवति । तत्र मज्जानाम अस्थिमध्यवर्ति स्नेहो धातुविशेषः । यो अणिष्ठः सावाक् । भुक्तस्य तैल घृतादेर्यः सूक्ष्मोंशस्सवाचामाप्यायको भवतीति ॥ ३ ॥

( अन्नमयमित्यादि ) । पूर्वोक्त प्रकारेण मनः प्राणवाणीनां अन्नजल- तेजः सूक्ष्मांश भागैरुपकृतत्वादन्नमयं मनः । आपोमयः प्राणस्तेजोमयी वाग्भवतीति भावः । उपसंहरति ( अन्नमयं हीत्यादि ) ननु अन्नमयत्वादिकं मनः प्रभृतीनां कथं संगच्छते । यावता यः केवलमन्नमेवाश्नाति यथा मूषिकादयस्तेषां प्राणवत्वं वाग्मित्वं च न स्यात् । प्राणवाक्कारणयो र्जलतेजसोस्तत्राभावात् । तथा ये केवलं जल भक्षकाः सामुद्रा जीवास्तेषां समनस्कत्वं वाग्मित्वं न स्यात् । एवं ये केवलं तैल घृतादि भक्षकास्तेषां समनस्कत्वं प्राणवत्वं च न स्यात् । दृश्यते च तेषामपि समनस्कत्वादिक- मिति कथमुच्यते । अन्नमयमित्यादीति चेत् सत्यम् केवलमन्नादिभक्षकाना मेवाभावात् । अयं भावः येऽपि आखु प्रभृतयः केवलान्न भक्षका इति लोके प्रसिद्धिः । न तेपि केवलान्न भक्षकाः । सर्वेषां वस्तूनां त्रिवृत्कृतत्वात् भक्षण योग्यं यदन्नादिकं तत्सर्वं त्रिवृत्कृतमेव अत्रिवृत्कृतस्य भक्षणा- सम्भवात् । अतः अन्नमयं सोम्यमन इत्यादि कथनं नायुक्तमिति । भूय एव मेत्यादि । मनसो निरवयवत्वानीन्द्रियत्वादि लिंगेन नित्यत्वावगमात् । कथं मनसो नित्यस्यान्नाप्यायित्वमिति मन्वानः शिष्यो गुरुं पुनरपि पृच्छति तत्राह—( भूयएवेत्यादि ) । भगवान् भूयः पुनरपि तमेवार्थं पुनरपि विज्ञापयतु एवं प्रकारेण शिष्यः प्रार्थयति गुरुम् । अत्र विज्ञापयतु

वागिति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ४ ॥

इति छान्दोग्योपनिषद षष्ठाध्यायस्य
पंचमः खण्डः ॥ ५ ॥

—❀—

## अथ षष्ठाध्यायः षष्ठः खण्डः ।

दध्न सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स

इत्यत्र योऽयं णिच् प्रत्ययः स यस्मिन्नर्थे पूर्वं प्रयुक्तं तदनुकूलव्यापारार्थक एव । नतु नीचेनोच्चं प्रति निवेदनरूपं विज्ञानमिति । ( तथा सोम्येति होवाचेति ) । हे सोम्य प्रियदर्शन । पुनरपि तमेवार्थं विज्ञापयामीति गुरुरुवाचेति ॥ ४ ॥

इति छान्दोग्योपनिशद आनन्दभाष्ये षष्ठाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

—❀—

( दध्न इत्यादि ) । हे सोम्य ! प्रियदर्शन ! मथ्यमानस्य विलोडितस्य दध्नो दुग्ध विकारस्य योऽणिमा अणिमा स ऊर्ध्वः समुदीषति मिलित्वा ऊर्ध्वं गच्छति नवनीताकारेण । तत्सर्पिर्घृतं भवति नवनीताकारेण परिणमत् यथा घृतपद वाच्यं वस्तुतो दधिरेवेति ॥ १ ॥

एवमेव खलु सोम्य ! दधि सर्पिर्दृष्टान्त बलेन अन्नस्यौदनादेरश्यमानस्य पुरुषेणभुज्यमानस्यौदर्येण वह्निनापच्यमानस्य योऽणिमा अणीयानंशः

ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥

अपां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥

तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥

अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति हो वाच ॥ ५ ॥

इति छान्दोग्योपनिषद षष्ठाध्यायस्य
षष्ठः खण्डः ॥ ६ ॥

स ऊर्ध्वं समुदीषति ऊर्ध्वमुद्गतो भवति । तन्मनस्तदेव मनो वाच्यतां लभते। अन्नस्यैव सूक्ष्मो भागो मनस आप्यायको भवतीति । समुदीषतीत्यत्र ईष धातुर्गत्यर्थकः । तस्यैव समुदीषति पदम् तदूर्ध्वं गतिं गमयतीति ॥ २ ॥

एवमपां जलानां पीयमानानाम् औदर्येण वह्निना पाच्यमानानां योऽणिमा अणीयानंश उद्गतो भवति । स प्राणः प्राणस्याप्यायको भवति ॥ ३ ॥

एवमेव सोम्य तेजसो घृतादेरश्यमानस्य भुज्यमानस्यौदर्येण वह्निना परिपाच्यमानस्याणीयानंश उद्गतोऽभवन्वाच आप्यायको भवतीति। एभिर्दृष्टान्तैः हे सोम्य ! कथयामि अन्नमयं मन आपोमयः प्राणस्तेजोमयी वागिति । ( भूयएवमाभगवानित्यादि ) भूयः पुनरपि मां भगवान् विज्ञापयतु । हे भगवन् ! मनसो नित्यस्यान्नमत्वं भवद्भिः प्रतिपाद्यमानं मम मनसि स्थिरं न भवति । अतोदृष्टान्त बलेन पुनरपि तमेवार्थं विज्ञापयतु इति शिष्येण जिज्ञासिते गुरुः पुनरपि उवाच । हे शिष्य ! यथा त्वं कथयसि तदुत्तरं दृष्टान्तर बलेन पुनरपि कथयिष्यामि । यथा तव मनसि

# अथ षष्ठाध्यायः सप्तमः खण्डः ।

**षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबाऽऽपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥**

**स ह पञ्चदशाहानि नाऽऽश । अथ हैन मुपपसाद किं**

प्रत्ययो भवति । इदानीं तव मनसि असंभावना विपरीत भावना च जागर्ति । तां दृष्टान्तेनापनीय मनसो अन्नमयत्वं सुस्थिरायितं भविष्यतीति ।४-५॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
षष्ठः खण्डः ॥ ६ ॥

—❀—

( षोडशकल इत्यादि )। हे सोम्य! पुरुषः षोडशकलः षोडश-संख्यकाः कला विद्यन्ते यस्य तादृशोऽयं पुरुषः यदन्नं भुज्यते तस्याणीयो भागो मनसि शक्तिमादधाति । सा च मनसः शक्तिः षोडशधा प्रविभक्ता पुरुषस्य कला इति प्रोच्यते । तया कलया युक्तः पुरुषः षोडशकल इत्युच्यते । मनस एतादृश शक्ति संपत्यनन्तरमेव द्रष्टा श्रोता सर्वक्रिया समर्थो भवति । अन्यथा तु सर्व सामर्थ्यहानि र्भवति । एतदेव दर्शयितु-माह ( पञ्चदशेत्यादि पञ्चदशा हानि पञ्चदश संख्याकानि दिनानि । पञ्चदश दिनानीत्यर्थः । मा आशीः ओदनादीनां भोजनं कार्षीः । कामं स्वेच्छया अपो जलानि पिब । अपो अपिबतस्ते तव प्राणः विच्छेत्स्यते विनष्टो भविष्यति । आप्यायकस्याभावे तदवस्थानासम्भवात् ॥ १ ॥

एवं गुरुणा कथितः (स ह पञ्चदशा हानि) पञ्चदश दिवसं यावत् । न आशथ अन्नं न भुक्तवान् । अथ पञ्चदश दिनानन्तरं अभुञ्जना

ब्रवीमि भो इति । ऋचः सोम्य यजूंषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥

तं होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवं सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति ॥ ३ ॥

स हाऽऽशाथ हैनमुपससाद । तं ह यत्किंच पप्रच्छ

उपससाद आगतवान् आगत्योवाच । किं ब्रवीमि भोः गुरो ! पिता प्रोवाच, ऋचो ऋग्वेदस्य यजूंषि यजुर्वेद मन्त्राणां सामानि तन्मन्त्राणां च उच्चारणं कुरु । स होवाच । गुरुणा एवं कथितः प्रत्युवाच न वै माप्रतिभांति भोः भोगुरो ! एतेषां मन्त्राणां न वै मामां प्रतिभांति । एतेषामुच्चारणं नाहं शक्त इत्यर्थः ॥ २ ॥

तं श्वेतकेतुं प्रोवाच पिता । शृणु कारणं येन ऋगादीनि इदानीं ते न प्रतिभांति । यथा येन प्रकारेण सोम्य ! महतोऽत्यधिकपरिमाणयुक्तस्य अभ्याहितस्येन्धनैः प्रज्वालितस्याग्नेः एकोंऽगारः खद्योतमात्रः अत्यल्प परिमाणः परिशिष्टोऽवशिष्टः स्यात् । तेन खद्योत मात्रावशिष्टेनांऽगारेण ततोऽपि तत् परिमाणादल्पोऽपि न बहु दहेत् । एवमेव सोम्य ! ते तव अन्नाप्यायितानां षोडशानां कलानामेकैव कला अतिशिष्टा अवशिष्टा स्यात् । तया अवशिष्टया कलया एतर्हि इदानीं वेदान्नानुभवसि न प्रतिपद्यसे । अथ मम वचनं श्रुत्वा सर्वं विज्ञास्यसि । अतो अशान ओदनादीनां भोजनं कुरु इति ॥ ३ ॥

स श्वेतकेतु गुरोर्वचनं श्रुत्वा आश भोजनं कृतवान् । अथ भोजनानन्तरं एनं पितरं ह उपससाद पितुरंतिकमाजगाम । तं उपगतं पुत्रं

सर्वं ह प्रतिपेदे ॥ ४ ॥

तं होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वालयेत्तेन ततोऽपि बहु दहेत ॥५॥ एवं सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत्साऽन्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवस्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति । तद्धास्य विजज्ञाविति ॥ ६ ॥

## इति छान्दोग्योपनिषद षष्ठाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

पिता यत्किञ्च ऋगादिषु यत्किञ्चित् पप्रच्छ पृष्टवान् । सर्वं स श्वेतकेतुः ऋगादिकं शब्दतो अर्थतश्च प्रतिपेदे ज्ञातवानिति ॥ ४ ॥

(तं होवाचेत्यादि) । पूर्ववदेव व्याख्येयम् । तमल्प परिमाणमाणमप्य वशिष्टमंगारं तृणैश्चूर्णादिभिश्चोपसमाधाय प्राज्वालयेत वर्धयेत् । तेन समिद्धेन प्रज्वालितांगारेण ततोऽपि पूर्वापेक्षया बहु अधिकं दहेत् कष्ठादिकं भस्मसात् कुर्यात् ॥ ५ ॥

एवमेवोक्तेन प्रकारेण वह्नि वर्त्ततवाभोजनात् षोडशानां कलानां मध्यादेकैव कलाऽत शिष्टावशिष्टाऽभूत् । पुनरपि सा एकापि कला अन्नेनोपसमाहिता अन्नेनाप्यायिता प्राज्वालीः प्रज्वलिता अतिशयेन वृद्धिमागता । तया प्रवृद्धया मनः कलया एतर्हि इदानीं त्वं वेदाननुभवसि । शब्दतोऽर्थतश्च वेदा उपलभमाना भवन्त्यर्थः । तस्मात् कारणात् हे सोम्य ! अन्नमयं हि मन आपोमयः प्राणस्तेजोमयी वागिति । मनः प्रभृतीनामन्नमयादित्वं सिद्धमेवान्वयव्यतिरेकाभ्यामितिभावः । तद्धास्य

# अथ षष्ठाध्यायः अष्टमः खण्डः ।

**उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम ।**

विजज्ञौ विजज्ञाविति । तत् ह अस्य मन आदीनामन्नमयादित्वं श्वेतकेतु र्विज्ञौ ज्ञातवानित्यर्थः । द्विर्वचनं त्रिवृानत्करण प्रकरण समाप्त्यर्थकम् ॥६॥

ति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

कस्मिन् खलु विज्ञाते सर्वमिदं विज्ञातं भवतीत्यादिना एक विज्ञानेन सर्वविज्ञानप्रतिज्ञा कृता, तां प्रतिज्ञां समर्थयितुं ब्रह्मभिन्नस्य सर्वस्यैव प्रपञ्चस्य जडाजडलक्षणस्य ब्रह्मकार्यत्वं वक्तुं प्रवृत्तः तेजोवन्नात्मक सकल जडवर्गस्य ब्रह्मोपादेयत्वं गत प्रकरणेनोपपाद्य चेतनवर्गस्यापि ब्रह्मोपादेयत्व प्रतिपादनाय प्रकरणनान्तरं प्रस्तौति । यदि कदाचित् चेतन-राशिर्ब्रह्म कार्यं न भवेत्तदा ब्रह्मविज्ञानेन चेतन वर्गो न विज्ञायेतेति । सः प्रतिज्ञा न समर्थिता स्यादतस्तां प्रतिज्ञामुपपादयितुं चेतनराशेरपि ब्रह्मकार्यत्व प्रदर्शनाय प्रस्तौति (उद्दालको हेत्यादि) । उद्दालक नाम ऋषिः पुत्रं श्वेषकेतुं प्रत्युवाच । हे सोम्य श्वेतकेतो ! स्वप्नान्तं स्वप्नस्यान्तोऽवसानं स्वप्नान्तं सुषुप्तिरित्यर्थः प्रतिपादयतो मे ममोपदेशाद्विजानीहि । इत्येवं प्रकारेण पुत्रं प्रति उवाच पिता । एवं प्रकारेण पुत्रं स्वाभिमुखं कृत्वाह — ( यत्रैत-दित्यादि ) यत्र यस्मिन्कालविषेशे पुरुषः स्वपिति इत्येतन्नामभवति । अर्थात् यदा पुरुषः स्वपिति इति शब्दं प्रयुनक्ति । पुरुषाणां स्वापो यत्र भवतीति यावत् । हे सोम्य ! तदा तस्मिन्स्वापकाले पुरुषो जीवः सता ब्रह्मणा सदेव सोम्येदमग्र आसीदित्यादि वाक्य प्रतिपादित परमेश्वरेण सह सम्पन्नः संगतो भवति । तस्याः सत्सम्पत्तेः लयार्थकत्वं स्वपिति निर्वचनेन दर्शयति स्वमपीतो भवति । अत्र खलु स्व शब्दो न जीववाचकः । किन्तु परमेश्वर-वाचक एव । स्थान प्रमाणेन सत् शब्द स्वशब्दयोरेकार्थ बोधकत्वात् । सत् शब्दश्च परमात्मवाचकः । अतः स्वशब्दोऽपि तस्यैव ज्ञापकः ततश्च

**सता सोम्य तदा सम्पन्नो भवति। स्वमपीतो भवति। तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति ॥ १ ॥**

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतन मलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु**

स्वापकाले जीवः स्वं परमात्मानमपीतः संगतो भवति यस्मात् तस्मात्कारणात स्वपित्याचक्षते। न च परमात्मनो जीवभिन्नत्वात् कथं जीवं प्रति परमात्मनः स्वत्वमितिवाच्यम्। देव मनुष्य दि नामरूपरागाद्यभिमान प्रयोजक बहिर्मुख ज्ञान प्रसरवज्जागरितावस्थ जीव विशिष्टः परमात्मा देव मनुष्यादि नामरूप रागमोहाद्यौपाधिक बाह्याभ्यन्तराकाराभिमानादि कालुष्य रहित जीव शरीरकः सन् आत्मन्यन्तर्भूत इत्यर्थ करणेनादोषात्। विशेषतोऽयमर्थः। 'स्वाप्ययादिति' सूत्रे विचारयिष्यते। अत्र जीवस्य तेजोवन्नादिवत् परमात्मनिलय कथनात्तेजोवन्नादिवज्जीवस्यापि परमात्मकार्यत्वोपपत्तेः। परमात्म ज्ञानेन परमात्मकार्यजीवराशेरपि ज्ञातत्वं भवत्येव। कारण ज्ञानेन कार्य ज्ञानस्यावश्य भावित्वान्यत्र सिद्धत्वात् इति ॥ १ ॥

( स यथेत्यादि )। यथा येन प्रकारेण शकुनिः शुकादि पक्षीः सूत्रेण पक्षि मारकस्य व्याधस्य हस्तस्थित सूत्रेण प्रबद्धो। यन्त्रितः तत उड्डीयान्यत्र गमनाय कृतप्रयत्नोपि दिशं दिशं प्रतिदिशम् पतित्वा उड्डयनं कुर्वाणोऽपि अन्यत्रायतनमाश्रयान्तरं अलब्ध्वाऽप्राप्यबन्धनं व्याधस्य हस्तमेवोपश्रयते तदीय हस्ते एवागत्योपविशति। एवमेवानेनैव प्रकारेण पक्षी दृष्टान्तेन हे सोम्य! तन्मनः अन्नमयं हि सोम्य मन इत्यादिना पूर्वप्रकरणे प्रतिपादितं यन्मनस्तद्दिशं दिशं प्रतिदिशं पतित्वा जाग्रत्स्वप्न कालयोरनेक प्रकारक विषयग्रहणे व्यापृतं भूत्वापि अन्यत्रायतनं विश्रमस्थानमलब्ध्वा अप्राप्य विश्रामप्राप्तये प्राणं मुख्य प्राणमेवोपश्रयते श्रान्तं मनो विश्रामावाप्तये मुख्य प्राणेन सह संश्लेष विशेषमापद्यते इत्यर्थः। ननु मनो

**सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सोम्य मन इति ॥ २ ॥**

**अशनायापिपासे मे सोम्य विजानीहीति। यत्रै-तत्पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते।**

विश्रामाय प्राणमेव कथमाश्रयते न स्थानान्तरं तत्र कारणं प्रदर्शयितुमाह ( प्राणबन्धन इत्यादि )। हे सोम्य! मनो यतः प्राणबन्धनं प्राणे हि मनो निबध्यते। अतएवोत्क्रमण काले प्राणस्योत्क्रमणानन्तरं मन आदीना मुत्क्रमो भवत्येव। तस्मात् सुषुप्ति दशायां वागिन्द्रिय सहितं मनः वाङ्-मनसि सम्पद्यते मनः प्राणे इति प्रयाणकालोक्तन्यायेन प्राणे संश्लेष विशेषमापन्न सत् मन उपरत व्यापारवत् भवतीति ॥ २ ॥

पूर्वोक्त प्रकारेण जीवस्य परमात्मनः कार्यत्वं सम्पादयितु सुषुप्ति समये परमात्मनि जीवस्य लयं तत्प्रसंगात् वागादि करणानां प्राणे संश्लेषं च प्रतिपाद्य अशनायादिनामनिर्वचनद्वारेणापि सच्छब्द वाच्य परमेश्वरस्य जगतो मूल कारणतां व्यवस्थापयितुमाह ( अशनायापिपासे इत्यादि )। अशनायापिपासे तत्राशितुं भोक्तुमिच्छा अशनाया पातुमिच्छा पिपासा ते द्व अशनायापिपासे तयोरसनायापिपासयोः तत्वं हे सोम्य श्वेतकेतो मत्तो विजान हि। यत्र यस्मिन् समये पुरुष अशिशिषति इत्येतन्नाम भवति यदा पुरुषस्याशितुमिच्छति पुरुषोऽशिशिषति इति। शब्दं यदालोकाः प्रयुंजते इति। यदा खलु पुरुषस्याशितुमिच्छा जायते तदा तदनन्तरमशितं पुरुषेण भुक्तमन्नं आपो जलानि अशितं कठिनं तदन्नं पीता आपो नयन्ते तदन्नं द्रवीकृत्य रसादिभावेन परिणामयन्ति। तदापुरुषोपभुक्तं जीर्णं भवति। तद्रसादिभावन शरीरं नयन्ते तेनाशिते जीर्णे पुनरपि पुरुषस्याशिशि-षाप्रादुर्भवति। तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येव तदयमाचक्षते अशनायेति। तत्रगां नयतीति गोनायो गवां पालकोऽश्वं नयतीति अश्वनायः

तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति । तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहीति । नेदममूलं भविष्यतीति ॥ ३ ॥

तस्य क्व मूलं स्यादन्यत्रान्नात् । एव मेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥

पुरुषं नयति ग्रामात् ग्रामान्तरं नयतीति पुरुषनायो राजा इति लोका आचक्षते यथागोनेतारं गोनायक इति कथ्यते । एवं भुक्तान्नस्य नेत्रीरपः लोका अशनायेति कथयन्ति । तत्रैवम् जलैः रसभावं प्रापिते अन्ने तेनान्नेन समुत्पन्नमेतत् शुंगं शुग सदृशं शरीराख्यं कार्यं विजानीहि किं ज्ञातव्यं तत्राह ( नेदममूलं भविष्यतीति ) । इदं शरीरूपं कार्यममूलं कारणरहितं न भवितुमर्हति यत्कार्यं तत्सकारणकम् यथाघठादीति व्याप्तेः कार्यं चेदं शरीरमतोऽवश्यमेवैतस्य कारणं किंचिद्भविष्यतीति ॥ ३ ॥

एतस्य शरीराख्यकार्यस्य किं मूलं स्यादित्याशयेनाह ( तस्येत्यादि ) । तस्य शरीराख्य कार्यस्य किं मूलं कारणं स्याद्भवेदिति पुत्रेण पृष्टे पिता प्राह अन्यत्रान्नात् अन्नंपरित्यज्यान्यदस्यमूलं किं स्यात् । न किमप्यन्यदस्य मूलं किन्तु अन्नमेव शरीरकार्यस्य कारणमितिभावः ।

( एवमेवेत्यादि ) । यथा शरीरमुत्पत्ति विनाशवत्वेन कार्यत्वात् सकारणकमिति तस्यकारणं परंपरया अन्नम् । एवं अन्नमपि उत्पत्ति विनाशवत्त्वात् कार्यं कार्यत्वाच्च तस्यापि किमपि कारणं स्यात् । किं तस्य कारणं स्यात्तत्राह एवमेवान्नेन शुंगेनेत्यादि अन्नस्यापि कार्यत्वाते

**अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति। तत्रैतदेव शुङ्गमुत्पतितं सोम्य विजानीहीति। नेदममूलं भविष्यतीति ॥ ५ ॥**

तन्मूलमाप एव। अन्नात्मक कार्येण तज्जनक जलात्मक कारणस्यानुभानात्। अद्भि सोम्य शुंगेन तेजो मूल मन्विच्छ। जलस्यापि उत्पत्ति विनाशवत्वात् कार्यत्वात्। कार्यत्वात्तस्यापि कारणं तेज इति विजानीहि। तेजसा सोम्य शुंगेन सन्मूलमन्विच्छ। तेजसोपि उत्पत्ति विनाशवत्वात्तस्यापि किमप्यवश्य मूलं कारणमिति तेजसा कार्येण सदेव मूलं कारणं विजानीहि। तदेव सत् अस्य सर्वस्यजगतः साक्षात् परंपरया कारणम्। अवनिरिव चतुर्विध भूतग्रामस्य। अतः सन्मूलाः सोम्येमाः प्रजाः सर्वा अपि प्रजाः स्थावर जंगमलक्षणाः सन्मूलाः सत्कारणाः सदायतनाः न केवलं सर्वाः प्रजाः सन्मूलाः किन्तु स्थितिकालेपि सदायतनाः सदाश्रयाः सदेवायतनं यासां तथाविधाः सदायतनाः अन्ते च सत्प्रतिष्ठाः सदेव प्रतिष्ठालयस्थानं यासां तथाविधाः। एतावता स्थावर जंगम लक्षण कार्यस्य सदाख्य परमात्मनि उत्पत्तिः तत्रैव स्थितिर्लयस्यापि प्रतिपादितः। तेन मृत्तिकादौ विद्यमानस्य घटादि कार्यस्य मृत्तिकायामेवोत्पत्ति स्थिति विनाश दर्शनेन तत्कारणकत्वं स्थितं भवति। तद्वज्जगतोपि कारणं परमात्मैव नान्यत् किमपीति भावः ॥ ४ ॥ ५ ॥

ननु यदि शरीरादिकं सर्वं तेजोवन्नमूलकं शरीरस्य लोहित मांसादि रूपेण परिणामः कथं स्यात् विलक्षण कार्योत्पादनस्या शक्यत्वादिति चेत्तत्राह ( यथा नु खलु सोम्येमास्तिस्रो देवता इत्यादि )। यथा नु खलु सोम्येमास्तिस्रो देवतास्तेजोवन्नादिकाः पुरुषं प्राप्य एकैका त्रिवृत्त्रिवृत्भवति तदुक्तं पुरस्तात् अन्न मोदनादिकमशितं

**तस्य क्व मूलं स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवति। अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्। स य एषोऽणिमा ॥ ६ ॥**

त्रेधा प्रकारत्रयेण विधीयते परिणमते इत्यादि प्रकरणे पूर्वं कथितमतस्ते-जोवन्नादीनां शरीराकारेण लोहित मांसाद्याकारेण परिणामेन कापि ह्रति भवतीति।

एवं क्रमेण सुषुप्ति काले जीवस्य सदात्मक परमात्मनि सम्पत्ति लयं प्रदर्श्य प्रयाण कालेपि जीवस्य सत्येव परमात्मनि सम्पत्ति दर्शयितुमाह (अस्यसोम्येत्यादि)। हे सोम्य ! अस्य पुरुषस्य जीवस्य प्रयतो म्रियमाणस्य वाग् वागिन्द्रियं मनसि संपद्यते तत्रलीयते। यद्यपि वाचो मनः प्रकृतिकत्वान्न मनसि लयः सम्भवति। कारणे एव कार्यस्य लय इति नियमात्। तथापि स्वव्यापारो परमकारणीभूत संश्लेष विशेष एव मनसि वाचो लय इति। मनः प्राणे मनसोलयः प्राणे तत्रापि पूर्वोक्त लयः प्राणस्तेजसि लीयते। प्राणो जीवे संपन्नः सन् जीवेन सह तेजः शब्दोपलक्षित सर्वभूतेषु सम्पन्नो भवति। तेजः परस्यांदेवतायाम् तदनन्तरं सुखादि भोगायास विश्रामार्थं तेजः शब्दितानां जीवविशिष्टानां सूक्ष्मभूतानां परस्यां देवतायां सदात्मके परमात्मनि सम्पत्तिर्लयो भवतीति भावः ॥ ६ ॥

(स यइत्यादि)। स य एतादृशः यः स पूर्वमुत्पत्ति लयस्थानत्वादिनोक्तः परमात्मा एषोऽणिमा सूक्ष्मः इन्द्रियाद्यग्राह्यत्वात् परमाणुवद्दुर्विज्ञेयः

ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति । भूय एव भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥

इति छान्दोग्योपनिषद षष्ठाध्यायस्य

अष्टमः खण्डः ॥ ८ ॥

## अथ षष्ठाध्याय: नवमः खण्डः ।

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां

( ऐतदात्म्यमिदं ) सर्वम् इदं परिदृश्यमानं सर्वं जड चेतन साधारणं पदार्थं जातं एतत् स्वरूपमेव । तत्सत्यं तदेव सच्छब्दितं सत्यं सर्वथा बाधरहितं स सर्वेषामात्माः । एवं प्रकारेण सर्वत्र सिद्धं सदात्मकत्वं श्वेतकेतावपि उपसंहरति तदिति हे श्वेतकेतो ! तदेवत्वमसि । अत्र त्वं पदमन्तर्यामि पर्यन्तस्य बोधकम् । अर्थात् स्थूल एवंभूतः त्वं सर्वदैव सूक्ष्मं तादृशं सत्स्वरूपमेवासीति ।

( भूय एवेत्यादि ) । ननु यदि सुषुप्ति समये प्रजानां सति लयो भवेत् तदा जीवानां पुनरुत्थानं न स्यात् । यथा समुद्रे लीलानां तरंगादीनां समुद्रात् पुनरुत्थानं न भवति । अतः प्रजानां सुषुप्तौ लयो न भवतीति मन्वानः श्वेतकेतुः पुनराह । भूयः पुनरपि मा मां भगवानुक्तमेवार्थं । विशेषरूपेण विज्ञापयतु दृष्टान्तद्वारा बोधयतु । एवं प्रकारेण श्वेतकेतुना प्रार्थितो गुरुः तथा सोम्येति होवाच । हे श्वेतकेतो ! दुर्विज्ञेयत्वादयं विषयः तव मनसि न समाविष्टो भवति । अतः पुनरपि दृष्टान्तान्तरेण प्रतिपादयामि सावधानमनाः शृणु ॥ ७ ॥ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य अष्टमः खण्डः ॥ ८ ॥

सति सम्पत्ति समये कथं न जानन्ति अत्र दृष्टान्तं दर्शयितुमाह ( यथेत्यादि ) हे सोम्य यथा येन प्रकारेण मधुकृतः मधुकुर्वन्ति सम्पादयन्ति

**वृक्षाणां रसान्समवहारमेकतां रसं गमय न्त ॥ १ ॥**

**ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥२॥**

**त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ ३ ॥**

ये ते मधुकृतो मधुकर मक्षिकाः मधुनिस्तिष्ठन्तिमधुनिष्पादयन्ति नानात्ययानां नानादिक्कालानां वृक्षाणामाम्रपनसादीनां रसान्समवहारं सम्यगानीयरसानेकताम् एकभावं मधुत्वेन गमयन्ति नानारसान्मधुभावमापादयन्तीत्यर्थः ॥ १ ॥

ते रसाः अनेकवृक्ष सम्बन्धिनोऽनेकप्रकारकाः तत्र प्रकृत विषये विवेकं न लभन्ते न प्राप्नुवन्ति । अहममुष्य वृक्षस्य पनसस्याम्रादे र्वा रसोस्मि अमुष्य वृक्षस्यरसोऽस्मीति क्रमेण पार्थक्यं न प्राप्नुवन्ति एवमेवानेनैव प्रकारेण हे सोम्य ! इमाः सर्वाः प्रजाः देवदत्तादयः प्रतिदिनं सति परमात्मनि सुषुप्तिकाले प्रलयादिकाले च सम्पद्य न विदुः सति सम्पन्नाः सत्यो न विजानीयुः । सति सम्पद्यामहे अहं देवदत्तोऽहममुकस्य पुत्र इति क्रमेण न जानन्तीति ॥ २ ॥

ते सत्सम्पन्नाः इह यद्यद्भवन्ति सुषुप्तेः पूर्वं यो हि पुरुषो यदभिमानी भवति स सुषुप्तिकाले सति सम्पत्तिकाले तद्वासनयैव वासितो भवति । स अतः सः सम्पत्यनन्तरमपि तया भावनया भावितः पुनरपि तदेव भवति व्याघ्रो वा सिंहो वा व्याघ्राभिमानी व्याघ्र एव भवति सिंहाभिमानी सिंह एवति वृको वा वराहो वा कीटो वा पतंगो वा दंशो वा मशको वा सहस्रयुग व्यवधानेपि यस्य यादृशीभावना जातिनिमित्ता सा वासना तं

**स य एषोऽणिमा। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥**

**इति छान्दोग्योपनिषद षष्ठाध्यायस्य**
**नवमः खण्डः ॥ ९ ॥**

—❀—

न मुंचति इति तद्वासनया वासितस्तां तां योनिमेवाधिगच्छति। तस्मात् दर्शनानुसारात्सुषुप्तौ लयो न पुनरुत्थानस्य विरोधी भवतीति भावः ॥ ३ ॥

( स य एषः ) परमात्मा अणिमा अणुरतिशयेनसूक्ष्मः प्रमाणान्तराविषयत्वात् ऐतदात्म्यमित्यादि पूर्ववद्व्याख्येयम्। ननु यदि सुषुप्तिकाले प्रलयकाले वा परमात्मनि जीवः संपन्नो भवति स्वापादनन्तरं प्रलयादनन्तरं वा तत उत्थायायागतो भवति। तदा यथा प्रातःकाले गृहादुत्थायागतस्य पुरुगतस्य पुरुषस्याहं गृहादागतोस्मि इत्याकारकं प्रतिसन्धानं भवति तद्वत्सुषुप्त्यनन्तरं परमात्मनः सकाशादागतोस्मीत्याकारकं प्रतिसन्धानं भवेत्। न त्वेवं कस्यापि जीवस्य प्रतिसन्धानं भवद्दृष्टं तस्मात्सत्सम्पत्यनन्तरं पुनरागमनं जीववस्य भवतीति न युक्तियुक्तमित्येवं मन्यमानः श्वेतकेतुराह—(भूयएवेत्यादि ) हे भगवन्! भूयः पुनरपि मा मां विज्ञापयतु मम मनसि भवदुक्तम प्रतीतिमिव भवति। अत एतस्मिन् विषये भवन्तो मां पुनः पुनः प्रतिबोधयन्तु एवं शिष्यस्य सन्दिग्धमिव वचनं श्रुत्वा तत्सन्देह निवृत्यर्थं गुरुराह तथा सोम्येति होवाच पुनरपि दृष्टान्तद्वारेण तदर्थं कथयामीति ॥ ४ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
नवमः खण्डः ॥ ९ ॥

—❀—

# अथ षष्ठाध्यायः दशमः खण्डः ।

इमा सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीय महमस्मीति ॥ १ ॥

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा

( इमाः सोम्येत्यादि ) हे सोम्य ! यथा नद्यो गंगादिकाः पुरस्तात् पूर्वां दिशं प्रति प्राच्यः पूर्वाभिमुखतया स्यन्दन्ते । पूर्वसमुद्रं प्रति गच्छन्ति प्रतीच्यः पश्चाद्देशप्रवृत्ताः सिन्धु प्रभृतिका नद्यः प्रत्यङ्मुखतया पश्चिम समुद्रं प्रति गच्छन्ति । ताः समुद्रात्समुद्रमेवापियन्ति । मेघो हि समुद्राज्जलमादाय वर्षति । गिरि गुहादौ पतितं जलं नदीरूपमासाद्य समुद्रं गच्छति । इति समुद्रादेव नदीजलमागतं पुनश्च समुद्रे एव गच्छत् समुद्रे लीनं भवति । एवं प्रकारेण गंगाद्या नद्यः समुद्र एव भवन्ति । तत्र यथा ता नद्यः न विदुर्नैवं जानन्ति यदहं गंगास्मि अहं सिन्धुरस्मि ॥ १ ॥

(एवमेव खलु सोम्य इमाः) मनुष्यादिकाः प्रजाः सतः सकाशादागत्य न विदुर्नैवं जानन्ति यदहं परमात्मन आगतवानस्मि । किन्तु व्याघ्रादिभावमात्रस्यैव प्रतिसन्धानं कुर्वन्ति इति भावः । अन्यत्सर्वं पूर्ववदेव ज्ञातव्यम् ॥ २ ॥

ननु सुषुप्तेः पश्चात् जाग्रत्समये सोऽहमित्येवं क्रमेण प्रति सन्धानं जायते इति तस्यागमनं निश्चीयते । परन्तु मरणानन्तरं पुनर्जन्म प्राप्तौ

तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान्विज्ञापय-त्विति तथा सोम्येति होवाच ॥ ३ ॥

इति छान्दोग्योपनिषद षष्ठाध्यायस्य
दशमः खण्डः ॥१०॥

## अथ षष्ठाध्यायः एकादशः खण्डः ।

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीव-न्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत्स एष जीवेनाऽऽत्मनाऽऽत्मनाऽनुप्रभूतः पेयीयमानो

पूर्वजन्मानुभूतस्य प्रति सन्धानं न कस्यापि भवति तस्मात्पूर्वजन्मनो-ऽवसान समये देह वियोगे जीवस्यापि नाशः स्यादिति जीवानित्यत्वं मन्यमानः श्वेतकेतुराह भूय एव मा भगवानित्यादि व्याख्यानं पूर्ववदेव ज्ञातव्यमिति ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य दशमः खण्डः ॥ १० ॥

( अस्य सोम्येत्यादि ) हे सोम्य अस्य पुरोऽवस्थितस्य इदमः प्रत्यक्ष विषये शक्तत्वेनांगुल्यादिना वृक्षं दर्शयन् कथयति महतोऽनेक शाखोपशाखा युक्तस्य स्थावर जातिमतो वृक्षस्याश्वत्थादि वनस्पति विशेषस्य यः कश्चित्मूले मूलप्रदेशेऽभ्याहन्यात् परश्वादिना प्रहरेत् । तदा जीवन्नेव स वृक्षः स्रवेत् । जीवयुक्त एव जीवो रसं स्रवेत् । आहत देशात् रसः स्रवति । परन्तु मृत इति व्यवहारो न भवति । अथ यदि कश्चित् तस्यैव महतो वृक्षस्य मध्ये मध्य प्रदेशे परश्वादिना अभिहन्यात् । तदापि जीवन्नेव रसः स्रवेत् । अथ यदि तमेव वृक्षमग्रे शाखाद्यग्रावच्छेदेनाभिहन्यात् तदापि जीवन्नेव स वृक्षो रसं स्रवेत् । स एषो वृक्षो महान् रसस्रवणात्मक लिंगानुमिते न जीवात्मना जीवरूपेण अनुप्रभूतः सर्वात्मना व्याप्तः पेपीयमानोऽतिशयेनोदकं पिबन्

मोदमानस्तिष्ठति ॥१॥

अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति, द्वितीयां जहात्यथ सा शुष्यति, तृतीयां जहात्यथ सा शुष्यति, सर्वं जहाति सर्वः शुष्यति ॥२॥

एवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो

भूमिसम्बन्धिनो रसान् मूलद्वारा गृह्णन् मोदमानस्तत्प्रयुक्त सुखादिकमनुभवन् आस्ते तिष्ठति ॥ १ ॥

तस्यैतादृशस्य महतो वृक्षस्य यदा कालधर्मवशात् एकां शाखां रोगादि ग्रस्तां जीवो वृक्षस्थितो जीव जहाति त्यजति । शाखायां व्याप्तं स्वकीयमंशमुपसंहरति । तदा सा शाखा शुष्यति शोषमुपयाति तत्र वृक्षावयवस्यैव विनाशो भवति नतु सर्वथा जीवस्य । अथ यदि कारण वशात् द्वितीयां शाखां जहाति, ततः स्वावयवमुपसंहरति । तथाहि सापि शाखा शुष्यति शोषमुपयाति । अथ यदि तृतीयां शाखां जहाति तदा जीवापगमादनन्तरं तृतीया शोषमुपयाति । सर्वं जहाति सर्वः शुष्यति । यदि जीवं सर्वं वृक्षंत्यजति तदा सर्वः शोषमुपयाति । अयं भावः ॥ २ ॥

यथा एकैक शाखाशोषो न जीवनाशप्रयोज्योऽपि तु जीवस्य त्यागनिमित्तः । प्रदेशान्तरे जीवस्य विद्यमानत्वात् । अपितु जीवस्य संकोचमूलकः शोषः । हे सोम्य ! एवमेव शाखाशोषदृष्टांतेन मनुष्यादिषु जीवस्य त्यागनिमित्तकमेव शरीरस्य मरणं भवति नतु जीवस्य कदाचिदपि मरणं भवति । अजोनित्यः शाश्वतोऽयं पुराण इति श्रुतेः । कृतहानि

इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

इति छान्दोग्योपनिषद षष्ठाध्यायस्य
एकादशः खण्डः ॥११॥

## अथ षष्ठाध्यायः द्वादशः खण्डः ।

**न्यग्रोध फलमत आहरेतीदं भगव इति । भिन्द्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव-**

अकृताभ्यागम प्रसंगाच्च अतो जीवापेतं जीव सम्बन्धरहितमिदं शरीरं म्रियते । शरीरस्यैव नाशो भवति । न जीवो म्रियते । अतः सुषुप्ति मरण दशायामपि परमात्मनि जीवस्य लयेऽपि जीवो न नश्यति ! अन्यत्सर्वं पूर्ववदेव व्याख्येयम् । ( भूय एवेत्यादि ) एवं प्रकारेणोपदिष्टोपि श्वेतकेतुः अतिसूक्ष्मस्य सत् शब्द वाच्यस्य परमात्मनः रूपस्पर्शादिरहितस्यानेक प्रकारक स्थावर जंगमादि युक्तानेक ब्रह्माण्ड जनकत्वं न संभवतीति मन्यमानः पुनरपि गुरुमुवाच । हे गुरो ! पुनरपि मामुपदिशेति । गुरुरपि तद्बोधनाय प्राह तथा सोम्येति होवाचेत्यादि ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
एकादशः खण्डः ॥ ११ ॥

(न्यग्रोधफलमित्यादि) हे सोम्य ! यदि एनमर्थं प्रत्यक्षं कर्तुमिच्छसि । तदा अस्मात् न्यग्रोधवृक्षादेकं फलमाहर आनयेति । एवं पित्रोक्तः श्वेतकेतुः न्यग्रोधफलमानीय दर्शितवान् । हे भगवन् ! एतत् न्यग्रोधफलम् आनीतामिति । पुनः पितोवाच हे सोम्य ! एतत्फलं भिन्धीति । भिन्नं भगव इति श्वेतकेतु रुवाच । पुनः पित्रोक्ते भिद्यमाने फले किं पश्यसीति । स आह । हे भगवन् ! इमा धाना अत्रभिन्न फले अण्व्य इति सूक्ष्मा एव

**इति । आसामङ्गैकां भिन्द्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति ॥१॥**

**तं होवाच । यं वै सोम्यैतमणिमानं न निभालयसे एतस्य वै किल सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति-श्रद्धत्स्व सोम्येति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा**

पश्यामीति पितोवाच । हे पुत्र ! आसां धानानां मध्यात् एकां धानां भिन्धि विदारयेति । भिन्ना भगवन् पुत्रस्तथा कृतवानिति । पुनः पितोवाच किमत्र भिन्नायां धानायां पश्यसीति । पुत्र उवाच । न किंचन भगव इति ॥ १ ॥

तं होवाच पिता । हे सोम्य ! यं वै धानामध्येऽणिमानमतिसूक्ष्मत्वात् न निभालयसे न पश्यसि तस्यैवेन्द्रियाग्राह्यस्य पुरो विद्यमानो महान् न्यग्रोध वृक्षस्तिष्ठति । तस्यैवैतत्महत्कार्यमिति । श्रद्धत्वेति । यथाऽत्र सूक्ष्मात् महतः कार्यस्य न्यग्रोध वृक्षात्मकस्योत्पत्तिर्जाता तथैव सच्छब्द वाच्य परमात्मनः इन्द्रियाग्राह्यस्य सकाशात् परिदृश्यमानस्य स्थूलस्य विविधप्रपञ्चस्योत्पत्तिरपि सम्भवत्येवेति प्रकृत विषये श्रद्धां कुरु । श्रद्धया मनसः समाधानं स्यात् । ततश्च तदर्थावगतिरपि अनायासेनैव भविष्यतीति श्रद्धा आवश्यकीतिभावः ॥ २ ॥

यदि परमात्मा जगतः कारण तदा कथं नोपलब्धो भवति । सर्वत्रकार्ये उपलभ्यमाने तदनुगतं कारणमुपलभ्यते एव । यथा सौवर्णे घटे उपलभ्यमाने तदनुगतं सुवर्णद्रव्यमुपलभ्यते एव । एवं यदि सच्छब्दवाच्यः परमात्मा-कारणं तदा सोऽपि कार्यानुगततयोपलभ्येत नोपलभ्यते । तस्मात् स न

भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति छान्दोग्योपनिषद षष्ठाध्यायस्य
द्वादशः खण्डः ॥१२॥

## अथ षष्ठाध्यायः त्रयोदशः खण्डः ।

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार । तं होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥१॥

—❀—

जगतः कारणमिति मन्यमानः श्वेतकेतुरुवाच भूय एव मा भगवानित्यादि एवं शिष्येण प्रार्थितो गुरुराह तथेत्यादि पूर्ववत् ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

विद्यमानमपि वस्तु कदाचित् उपलब्धं न भवति । यथा दिवसे सूर्यं प्रभयाभिभूतं ग्रहनक्षत्रमंडलं गगने विद्यमानपि चक्षुरादिना नोपलभ्यते प्रकारान्तरेण तूपलभ्यते एवात्र कारणं शृणु दृष्टान्तद्वारा तदेव दृष्टान्तं दर्शयितुमाह ( लवण मित्यादि ) अमुमर्थं यदि प्रत्यक्षीकर्तुमिच्छसि तदा लवणं लवणपिण्डमुदकम् घटादावुदके अवधाय प्रक्षिप्य प्रातः प्रातः काले-मा मां मत्समीपमुपसीदथा मत्समीपमागच्छेत्यर्थः । स ह श्वेतकेतु स्तथा चकार एवं यथोक्तप्रकारेण रात्रौ लवणपिण्डं जले निक्षिप्तवानित्यर्थः । निक्षिप्य च प्रातःकाले गुरुसमीपमागतवान् । तं समागतं पुत्रं पितोवाच परेद्युः हे सोम्य ! यद् दोषारजन्यामुदके जले लवणमवाधा निक्षिप्तवान् तल्लवणं जले प्रक्षिप्तं ततो निष्कास्याहरानय । एवं पित्रोक्तः श्वेतकेतुः अवमृश्यावलोक्य न विविद न ज्ञातवान् । जलात् पार्थक्येन लवणं न ज्ञातवान् तत्र जले विद्यमानमपि ॥ १ ॥

**यथा विलीनमेवाङ्ग । अस्यान्तादाचामेति कथमिति लवणमिति । मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमिति । अभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार । तच्छश्वत्संवर्तते तं होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥२॥**

**स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा**

यथा विलीनमेवांग हे अंग यथा येन प्रकारेण जले विद्यमानमपि लवणं जले विलीनं सच्चक्षुरिन्द्रियेण त्वगिन्द्रियेण वा नोपलब्धुं शक्यम् । प्रकारान्तरेण तु ज्ञायते । एवमेव सदात्मकं ब्रह्म सर्वत्रानुस्यूतमिति चक्षुषा त्वचयावा गृहीतुं न शक्यमपितु आचार्योपदेशादिना एवागतं भवति । रूपस्पर्शाभावेनेन्द्रियायोग्यत्वादित्याशयेनाह पिता (अथास्येत्यादि ) हे सोम्य ! अस्य लवण सहितस्य जलस्यादौ मूलप्रदेशे आचाम आचमनं कुरु । एवं पित्रोक्तः श्वेतकेतु स्तेनैव प्रकारेणाचमनं कृतवान् ; तदा पित्रोक्तं कथमिवाभाति । इतरः प्राह लवणमिति एवं मध्येऽन्तेपि कृतवान् । तदा पित्रोक्तम् एतत् स लवणं जलमभिप्राश्य मत्समीपमागच्छ इत्युक्तः पुत्र स्तथा कृतवान् । तत्शश्वत्संवर्तते । तल्लवणं जले शश्वत्सर्वदा सर्वत्रैव वर्तते इत्युक्तवन्तं शिष्यं प्रति पिता प्राह । किमाह पिता तत्राह ( अत्रवा वेत्यादि ) हे सोम्य ! अत्रैव किल जगत्कारणं सद्विद्यते । किन्तु जले विद्यमानमेव लवणं चक्षुषा त्वगिन्द्रियेण वाऽनुपलभ्यमानमपि रसनेन्द्रियेणोपलब्धवानसि तथैवात्रैव । जगति विद्यमानमेव सत् आचार्योपदेशादिना ज्ञातुं योग्यमेव । नायोग्यन्त न निभालयसे न पश्यसि द्रष्टुमशक्तोसि । अत्रैव जगति विद्यते इति ॥ २ ॥

स य इत्यादि पूर्ववदेव व्याख्येयम् ( भूय एवेत्यादि ) तत्सत् जगत कारणं यदि अत्रैव विद्यते रूप स्पर्श रहितत्वाच्चक्षुरादिना नोपलभ्यते

तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापय-त्विति तथा सोम्येति होवाच ॥३॥

इति छान्दोग्योपनिषद षष्ठाऽयायस्य
त्रयोदशः खण्डः ॥१३॥

## अथ षष्ठाध्यायः चतुर्दशः खण्डः ।

यथा सोम्प पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ् वोदङ्वाधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्षआनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥

तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा

तदा तदुपलब्धौक उपायं इति पृच्छति श्वेत केतुं भूयएवेत्यादिना। एवं शिष्येण प्रार्थितां गुरुस्तदुपायं दर्शयितुमाह। तथा सोम्येति होवाच हे सोम्य ! यत्पृष्टं त्वया तदहं दृष्टान्तेन प्रतिपादयामीति ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
त्रयोदशः खण्ड : ॥१३॥

हे सोम्य ! यथा येन प्रकारेण लोके गन्धारेभ्य स्तदाख्य जनपदेभ्यो यं कमपि पुरुषं धनवन्तं अभिनद्धाक्ष पिनद्ध चक्षुषमानीयकश्चिच्चौरो द्रव्यहर्ता तं पुरुषं ततोतिजने मनुष्यागमन वर्जितेऽरण्ये विसृजेत् सविसृष्टस्तादृशः पुरुषो दिग्भ्रमयुक्तः प्राङ् पूर्वमुखः वा उदङ् मुखो वा अधो मुखो वा प्रध्मायीतशब्दं कुर्यात् रोदनं कुर्यादित्यर्थः। अभिनद्धाक्ष आनीतोऽ-भिनद्धाक्षो विसृष्टः चौरो बद्ध चक्षुषं मामानीतवान् बद्ध चक्षुष-मेव माममुंच दत्रेति ॥ १ ॥

तत्र तस्य बद्ध चक्षुषः कश्चित् कारुणिकः अभिहननं बन्धनं प्रमुच्य बन्धन रहितं कृत्वा एतां दिशं गन्धारा एतां दिशं व्रजेति। इत उत्तरप्रदेशे

एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येत । एवमेवेहाऽऽचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्षेऽथ संपस्य इति ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापय-

गन्धारोदेशः अत उत्तरां दिशं गच्छ । एवं यदि कोपि ब्रूयात् तदा तेन तथोक्त स पुरुषो ग्रामात् एकस्मात् ग्रामात् ग्रामान्तरं द्वितीयादि ग्रामं पृच्छन् पण्डितः ऊहापोह कुशलो मेधावी उपदेष्टुः कथितमार्गाविस्मरणशीलः पुनर्गन्धारानेव तदाख्य जनपदमेवोपसम्पद्येत । स्वकीयं जनपदं गृहादिकं च प्राप्य विगत दुःखो भवति । एवमेवानेनैव प्रकारेणाचार्यवान् पुरुषो वेद । एवमाचार्यस्य गुरोः तत्वमसीत्यादि उपदेशात् यतो ब्रह्मात्मक स्त्वमसि तस्मात् कारणात् ब्रह्मात्मकतया स्वात्मानमनुसंदधीतः ! एवं प्रकारेण गुरुणोपदिष्टो वेद ब्रह्मात्मकत्वेन स्वात्मानोऽनुसंधानं करोति । तस्य तावदेव चिरं तस्य जड चेतन शरीरक ब्रह्मात्मकतया स्वात्मानं सन्धानं कुर्वतः पुरुषस्य तावदेव तावत्कालमेव चिरं विलंबो जायते । यावत् यावत्पर्यन्तम् प्रारब्धकर्म बलेन प्राप्त शरीरात् न विमो क्ष्येविमोक्ष्यते । एतत् शरीरपात पर्यन्तमेव बिलम्ब इत्यर्थः । अथ शरीर पातादनन्तरं सम्पत्स्ये सम्पत्स्यते सदात्मक ब्रह्मप्राप्तो भवतीति भावः ॥ २ ॥

स य एषोणिमेत्यादि व्याख्यानं तु पूर्वं वदेवेति । अथ प्रकृत देह विमोक्षानन्तरं ब्रह्म सम्पत्तिः स्यादिति कथितं तदयुक्तम् । यतो देहविमो-त्स्यैवासम्भवात् तथाहि अहं देवोऽहं मनुष्य इत्याद्यभिमानस्य यावदात्मा तावत् पर्यन्तम् स्थायित्वेन शरीर सम्बन्धस्यापि यावदात्म भावित्वात् । अतो देहपातादनन्तरं सत्सम्पत्तिरिति न श्रद्धास्पदमिति

त्विति तथा सोम्येति होवाच ।।३।।

इति छान्दोग्योपनिषद षष्ठाध्यायस्य
चतुर्दशः खण्डः ।।१४।।

## अथ षष्ठाध्यायः पञ्चदशः खण्डः ।

पुरुषं सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति।।१।। अथ यदास्य वाङ्मनसि संपद्यते मनः प्राणे प्राण-

मन्यमानः श्वेतकेतुः पुनरप्याहभूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति हो वाच ।। ३ ।।

इति छान्दोग्योग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
चतुर्दशः खण्ड ।। १४ ।।

( पुरुषमित्यादि ) हे सोम्य उपतापिनं ज्वरादि वेदना युक्तं मरण-वेदना क्लान्तं ज्ञातयस्वात्मीय परिवाराः पर्युपासते परितस्तिष्ठन्ति किं कुर्वन्त स्तत्राह ( जानासीत्यादि ) किं मां जानासि इत्थेवं वदन्तः तस्य मुमूर्षोः यावत्पर्यन्तं वाग् वागिन्द्रियं मनसि न सम्पद्यते मनसि विलीनं न भवति। मनः प्राणे विलीनं न भवति । प्राणस्तेजसि विलीनो न भवति । तेजः परस्यां देवतायां सदात्मके परमात्मनि तावत् पर्यन्तं जानाति मुमूर्षुः सत्सम्पत्ति पर्यन्तं सर्वानिज्ञातीञ्जानातीत्यर्थः ।। १ ।।

अथ यदा अस्य मुमूर्षोर्वागिन्द्रियं मनसि सम्पद्यते लीयते मनः प्राणे लीयते प्राणस्तेजसि लीनो भवति । तेजः परस्यां देवतायां लीनं भवति । अथ सत्संपत्यनन्तरं स मुमूर्षुर्न जानाति परमात्मनि लयानन्तरं ना जानातीत्यर्थः । एवं च सर्वेषामपि मरण समये सत्सम्पत्तिर्भवत्येव

स्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥२॥

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति छान्दोग्योपनिषद पष्ठाध्यायस्य
पञ्चदशः खण्डः ॥ १५ ॥

—❀—

किन्तु ये तत्राविद्वांसस्तेषां शरीराभि-मानस्य विद्यमानत्वात् तत उत्थाय मनुष्य देवादि भावं यथाकर्म यथा श्रुतं प्राप्नुवन्त्येव ये तु विद्वांसस्तेषां ज्ञानपूर्वकं सति लीना इति कर्मणामभावो न पुनरुत्थितो भवतीति भावः ॥ २ ॥

( स य एषोऽणिमेत्यादि ) प्रारब्ध कर्मणः समाप्त्यनन्तरं यस्मिन् परमात्मनि लीयते जीवः स सच्छन्द वाच्यः परमा अणुः सूक्ष्मः अन्यत् सर्वं पूर्ववदेव व्याख्येयमिति । ननु यदि मरिष्यतो देहाद्यभिमाने सति पुनरपि संसार प्राप्ति र्भवति विदुषस्तु सदात्मकत्वाभिसन्धौ तु नानर्थ प्राप्ति र्भवति । इति तु न श्रद्धेयम् । अभिसन्धि भेदमात्रेण महापुरुषार्थं तदभावौ नान्यत्र दृष्टौ इत्यभिप्रायेण पुनरपि श्वेतकेतुः पृच्छति भूय एव मा भगवान् विज्ञापय त्विति । पुनरपि पिता प्रोवाच तथा सोम्येति हो वाचेति ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य
पञ्चदशः खण्डः ॥ १५ ॥

—❀—

# अथ षष्ठाध्यायः षोडशः खण्डः ।

पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥१॥

अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं

( पुरुषमित्यादि ) हे सोम्य श्वेतकेतो ! कमपि चौर्य्यं हस्त गृहीतं राजपुरुषा हस्तं गृहीत्वा आनयंति अनेन भोः कीदृशमपराधं कृतवानित्येवं लोकेन पृष्टाः सन्तस्ते राजपुरुषा एवं वदंति अपहार्षीत् धनापहारं कृतवान् । स्तेयमकार्षीत् चौर्यरूपेण धनस्यापहारं कृतवान् । अपहारंच कृत्वा अपह्नवं करोति । 'परशुमस्मै तपतेति' एतस्य कुकृत्यस्य मार्जनाय परशुं लोहपिण्डमेतदर्थं तपततापय परशुमित्येवं वदन्तो राजपुरुषा स्तमानयन्तीति पूर्वेण सम्बन्धः । स हस्तगृहीतः पुरुषः नाहं द्रव्यापहारं कृतवानित्येवं द्रव्यस्यापहारं निह्नुवानो यदि वस्तुतो धनस्यापहर्ता भवति तत एव तस्मात् असत्य प्रतिज्ञाकरणात् स्वकीयमात्मानमनृतमसत्यं कुरुते ततः सोऽनृताभिसन्धोऽसत्यप्रतिज्ञः पुरुषः अनृतेनासत्येन स्वकीयं आत्मानमन्तर्धाय । अनृताभिसन्धियुक्तः राजपुरुषेणार्पितं तप्त परशुं हस्तेन प्रतिगृह्णाति । तदा स अनृताभिसन्धः पुरुषोऽसत्यापराधेन दह्यते तप्त परशुग्रहणाद्दग्धहस्तो भवति । ततश्चावश्यमनेन चौर्यं कृतमिति कृत्वा राजपुरुषेण हन्यते ताडन निगड प्रक्षेपादिना कदर्थ्यते ॥ १ ॥

अथ यदि स पुरुषो वस्तुत स्तस्य चौर्यस्याकर्ता भवति तदा तत एव तस्मादेव सत्य प्रतिज्ञत्वात् तेन सत्येनाभिसन्धेनात्मानं स्वकीयं सत्यं

**कुरुते स सत्याभिसन्धः सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रति गृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥**

**स यथा तत्र न दाह्येत ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति । तद्धास्य विजज्ञाविति विजज्ञाविति ॥३॥**

**इति छान्दोग्योपनिषद षष्ठाध्यायस्य षोडशः खण्डः ॥१६॥**

कुत्सित् कर्मरहितमात्मानं लोके ख्यापयति । तदा स सत्याभिसन्धः सत्य-प्रतिज्ञः सत्येनानृतभिन्नेनाभिसन्धानेन स्वकीयमात्मानमभिसन्धाय तप्तं परशु बह्नि तापित लोहपिण्डं गृह्णाति । स न दह्यते । सत्याभिसन्धि वशात् न दग्धहस्तो भवति । ततश्चायं शुद्ध इति कृत्वा न ताड्यते किन्तु मुच्यते । अपराधान्निरपराधोऽयमिति कृत्वा मुक्तो भवति । अथ च निर-पराधः स्वस्थो भवतीति भावः ॥ २ ॥

( स यथेत्यादि ) सः सत्याभिसन्धः पुरुषः तत्र तप्तलोहपिण्ड विशेषे ग्रहणेऽपि यथा दाह्येत दग्धो न भवति, एवं सदात्मक परमात्मलक्षण सत्यप्रतिज्ञः पुरुषः सांसारिकानर्थ जालैः कथमपि न लिप्यते । संसारे वसन्नपीति तस्मात् हे श्वेतकेतो ! सर्वस्य जड चेतन वर्गस्य सदात्मक ब्रह्म भावानुसंधानेन सत्याभिसन्धिरिति सर्वान्तर्गतस्त्वमपि सदात्मक इति सर्वदैव सदात्मकत्व लक्षण सत्याभिसन्धिमानेव भवन् । कथमपि संसार दाहेनासंस्पृष्टो बन्धनान्मुक्तो भविष्यसीत्यर्थः । ( तद्धासेत्यादि ) अस्य गुरोर्वचनात् स श्वेतकेतुः तत्सत् शब्दवाच्यं परमात्मानं तत्त्वतो विजज्ञौ ज्ञातवान् । अत्र द्विर्वचनमध्याय परिसमाप्त्यर्थकम् ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य षोडशः खण्डः ॥१६॥

इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्द भाष्यभूषितायाः

छान्दोग्योपनिषद षष्ठाध्यायः समाप्तः ॥ ६ ॥

श्रियः श्रियै नमः ।

अथ श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायाः

# छान्दोग्योपनिषदः

## सप्तमाध्यायः प्रथमः खण्डः ।

**अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तं होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति ॥१॥**

परमात्म तत्व प्रधानकः षष्ठोऽध्याय सतः परमात्मन एकत्व निर्णायको गतः । तत्र परमात्मभिन्न विकार लक्षण तत्त्वस्य निर्देशो न कृत इति तानि तत्त्वानि निर्देष्टव्यानीति । नामादारभ्य प्राण पर्यन्त विकारात्मकतत्वानि दर्शयित्वा तद्द्वारेण भूमाख्यं निरतिशयं तत्त्वं वक्ष्यामीति सप्तममध्यायमारभते ।

यदि नामादीनां निर्देशो न कृतः स्यात् केवलं सत्तत्वस्यैव निर्देशः स्यात् । तदा सतो ज्ञानेऽपि तदतिरिक्तानामादयो ज्ञातानस्युरिति एक विज्ञानेन सर्वविज्ञान प्रतिज्ञा न समर्थिता स्यादिति कस्यापि भ्रमो माभवत्विति तानि तत्वानि नामादीन्यत्र वक्ष्यति । अत मा अधीहीत्यादि । हे भगवो ! भगवन् ! मामधीहि । अध्यापय इत्येवं क्रमे । नारदो ऋषिः । सर्वविद्यासम्पन्नोऽपि सनत्कुमारं स्वभ्रातरं ऋषिं प्रति उपससाद । अधीहि भगव इति मंत्रोच्चारण पूर्वकं विधिवदुपसन्न इति भावः । तं विधिवदुपसन्नं नारदं कृपया प्रोवाच सनत्कुमारः यद्वेत्थ तेन मोपसीद ।

**स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेद-माथर्वणं चतुर्थमितिहासपुराणं पञ्चमम् । वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्य मेकायनम् । देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्प देवजनविद्याम् ।**

यत् किंचित् त्वं वेत्थ ज्ञातवानसि । तत्प्रख्यापनेन इदमहं जानीति प्रकारेण मां प्रति उपसीद मत्सकाशमागच्छ । ततस्ते ऊर्ध्वं वक्ष्यामीति । ततो भवतो विज्ञानादूर्ध्वमधिकं विज्ञातांशादूर्ध्वं ते तुभ्यं वक्ष्यामि कथयिष्यमि । यत्त्वया ज्ञायते तदुपदेशः पुनरुक्तिरिव स्यादतस्तदधिकस्यैवोपदेशः सार्थक इति भाव: ॥ १ ॥

एवं सनत्कुमारेण कथितः स नारदः उवाच प्रोक्तवान् । भगवन् ऋग्वेदं अध्येमि । ऋग्वेदं तदाख्यवेदं जानामि एवं यजुर्वेदं क्रियोपयोगि मन्त्रप्रधानकम् सामवेदं ज्ञानप्रधानकं चतुर्थमाथर्वणं वेदम् पंचममितिहास पुराणं जानामीति । एवं वेदानां वेदं ऋग्वेदादीनां प्रकृति प्रत्ययादि ज्ञापकं वेदं व्याकरणं जानामि । व्याकरण शास्त्रेण पद वाक्यादि विभाग द्वारा ऋगादयो ज्ञाता भवन्तीति । तमहं वेदानां वेदं व्याकरणं जानामीति । पित्र्यम् श्राद्ध कल्पं श्राद्ध प्रकारं सर्वत्राध्यमीत्यस्य सम्बन्धः राशिं गणित शास्त्रम् दैवं येन हि उत्पातादीनां ज्ञानं भवति । तादृश शास्त्रम् निधिं निधि दर्शनोपाय प्रतिपादक शास्त्रं यदध्ययनेन पृथिव्यादौ निहितं धनं ज्ञातं भवतीति । वाको वाक्यम् तर्क शास्त्रं एकायनमेकायन शास्त्रं नीतिशास्त्रमित्यर्थः । देवविद्यां देवतोपासन प्रकारक विद्याम् । ब्रह्मविद्यां वेदांग भूत कल्प शिक्षादि विद्याम् । भूतविद्यां भूतादि वशीकरण विद्याम् । क्षत्रविद्यां धनुर्वेदादि शास्त्रम् । नक्षत्रविद्यां ज्योतिः शास्त्रम् । सर्पदेवजनविद्यां तत्र सर्पविद्या गारुडविद्या देवविद्या गान्धर्वशास्त्रम् । जनविद्या सर्वलोकोपकारिणी विद्या आयुर्वेद

**एतद्भगवोऽध्येमि ॥२॥**

**सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मवित् श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः**

शास्त्रमित्यर्थः । एतद्भगवोऽध्येमि । हे भगवन् ! एतदुपर्युक्त सर्वविद्यामहमध्येमि जानामीति ॥ २ ॥

सोहं भगवो भगवान् पूजावान् एतत्सर्वं जानन्नपि मंत्रविदेवास्मि मंत्रविष्ठ एव । ऐहिक पारलौकिक साधनविषयक ज्ञानवानेव नतु आत्मविदस्मि परमात्मविषयक ज्ञानवान् नाहमस्मि । अत्र खलु आत्म शब्दः परमात्मबोधक एव नतु जीवपरकः । आत्म शब्दस्य परमात्मन्येव मुख्यत्वात् । ननु भवतु मंत्रज्ञातृत्वमेव आत्मवित्त्वे किमधिकं स्यात् तत्राह (श्रुतिमित्यादि) हे भगवन् भगवद्दृशेभ्यो भवत्सदृशात्म विद्भ्यः सकाशादेव एवं श्रुतं श्रुतवानस्मि यदात्मवित् आत्मज्ञानवान् शोकं शोकशब्द वाच्यं संसारमनेक प्रकारं तरति । आत्मज्ञानात् संसारसागरेभ्य समुत्तीर्णो भगवत्स्वरूपमभिध्यायन्निरतिशय सुखवान्भवतीत्यर्थः । सोहं भगवः शोचामि । ऋग्वेदादि विविध विद्यासम्पन्नोप्यहं केवल परमात्मज्ञान वैकल्यात् शोकसमुद्रे निमग्नोस्मि । तं तादृश संसारसागराविष्टं मां भगवान् शोकस्य पारं परमात्मज्ञानेन संसार सागरस्य पारं तारयत्विति । एतादृशं परमात्मज्ञानरहितमतिशयेन दूयमानं नारदं सनत्कुमारः प्रोवाच । यावत्किंचिदध्यगीष्ठाः यावत्किंचित् ऋग्वेदादिकमधीतवानसि तदेतत् सर्वं नामैव । किं तत्सर्वं नामैव तदेव दर्शयति नाम वा ऋग्वेद इत्यादि । नामैवैतदेतत् ऋग्वेदादिकं स नामैव । यद्यपि सर्वोपि प्रपञ्च नाम रूपात्मक स्तथापि विशिष्य ऋग्वेदादेः कथनात् ऋग्वेदादि रेवनामेति । एतावता किमायातं तत्राह नामोपास्वेति । नामात्मक ब्रह्मोपासनं कुरु इत्यर्थः । नामब्रह्मण उपासनाया यत्फलं तद्दर्शयति ।

शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति। तं होवाच। यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥३॥

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्याः। नामैवैतत् नामोपास्स्वेति ॥४॥

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति। यो नाम ब्रह्मेत्युपास्ते। अस्ति भगवो नाम्नो भूय इति। नाम्नो वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति ॥५॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य प्रथमः खण्डः ॥१॥

( स यो नामेत्यादि )। स यः पुरुषो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति यावत् देशे नाम प्रवृत्ति भवति तावद्देशे नाम ब्रह्मोपासकस्य यथेष्टं स्वेच्छया गमनागमनं भवति। पुनस्तदेवोपसंहरति यो नाम ब्रह्मेत्युपास्ते इति। यश्चात्मजिज्ञासु स्तं प्रति ब्रह्मत्वेन नाम्न उपदेशकरणादात्मत्वं ब्रह्मत्वं च समानार्थकमेवेति। ननु ब्रह्म व्यापकं नाम तु न तथा व्यापकमिति नामोपदेशेनापरितुष्टो नारदः पुनः पृच्छति। अस्ति भगवो नाम्नो भूय इत्यादि। नाम्नोऽपेक्षया गुणकृते किमप्यन्यदस्ति विपुलतरमित्यर्थः। अत्र च वैपुल्यं गुणाधिक्य कृतं न तु परिमाणापेक्षम् गुरुराह नाम्नो वा भूयोऽस्तीति, पुनरपि नारदः प्राह तन्मे भगवानित्यादि अति रोहितार्थमिदमिति ॥ ३ ॥ ४ ॥ ५ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

# अथ सप्तमाध्यायः द्वितीयः खण्डः ।

वाग् वाव नाम्नो भूयसी वाग् वा ऋग्वेदं विज्ञापयति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाको वाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां, दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीञ् श्वापदान्याकीट पतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यत् । न सत्यं नानृतं न साधु नासाधु नहृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥१॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं सत्रास्य

वाग् विषयक नारद प्रश्नं श्रुत्वा सनत्कुमारः प्राह (वाग् वावेत्यादि) वाक् पदं वागिन्द्रिय बोधकं वाव शब्दः प्रसिद्धार्थकः । इदं च वागिन्द्रियं नाम्नो वर्णात् भूयसी अधिका वर्णानामभिव्यंजकं वागिन्द्रियं पदं चाभिव्यंग्यमिति व्यंग्यव्यंजकयोर्मध्ये व्यंजकस्यैव श्रेष्ठत्वमाधिक्यं च वर्णात्मक नाम्नः कथमभिव्यंग्यत्वमिति प्रपंचयति वाग् वा ऋग्वेदं विज्ञापयति यजुर्वेदमित्यादि । वाचा हि सर्वमिदं प्रकाशितं भवति । अन्यत्सर्वं पूर्ववदेव व्याख्येयम् (हृदयज्ञमिति) हृदयं जानातीति हृदयज्ञः हृदयप्रिय इत्यर्थः । तद्विपरीतमहृदयज्ञम् एवमन्वयमुखेन वागिन्द्रिय प्रयोज्यत्वं नाम्नोऽ

यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य

द्वितीयः खण्डः ॥२॥

## अथ सप्तमाध्यायः तृतीयः खण्डः

**मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनु-**

भिधाय व्यतिरेकमुखेनापि तदधीनत्वं दर्शयितुमाह ( यद्वैवाग् न भविष्यदित्यादि ) वाचोऽभावे वेदाध्ययनासम्भवात् । धर्मादि विज्ञानं न स्यादित्यर्थः । तस्माद्वाचमुपास्स्वेति । अन्यत्सर्वं स्पष्टार्थकम् । स य इत्यादि ब्रवीत्विति एतत्प्रकरणं स्पष्टार्थकं पूर्ववदेव सर्वं व्याख्येयमिति ॥१-२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य

द्वितीयः खण्ड : ॥ २ ॥

वागपेक्षया किमन्यदधिकमिति शिष्य प्रश्नमवधार्य सनत्कुमारः प्राह । हे नारद ! वागपेक्षया मनो मनस्य न व्यापार विशिष्टमन्तःकरणं भूयोऽधिकम् । तन्मनः स्वव्यापारविशिष्टं सदेव वक्तव्ये वस्तुनि वाचः प्रवर्तकं भवति । तस्मात्कारणात् वागिन्द्रियं मनसि प्रोतं भवति । यद्वस्तु यस्मिन् अन्तर्भवति तत्तद्व्यापकत्वात्तस्माद् भूयोऽधिकं भवति । इति नियमः । अत्रार्थऽनुरूपं दृष्टान्तं दर्शयति । ( यथा वै इत्यादि ) यथा वै द्वे आमलके यथा आमलक फल द्वयं द्वे वा कोले यथा वा बदरीफलद्वयं यथा द्वौ अक्षौ । विभीतक फलद्वयं मुष्टो पाणौ अनुभवति

**भवति। स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते। मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म। मन उपास्स्वेति ॥१॥**

तत्रान्तर्भवति। पाणौ समाविष्टं भवति। एवं वाचं च नाम च मनोऽनु भवति। वाङ्मनस्यन्तर्गते भवतः। यथा खलु आमलकादि फल द्वयं पाणौ समाविष्टं भवति। तथैव वागिन्द्रियं नामचैतत् द्वयं मनसि समाविष्टं भवतीति भावः।

वाग् नाम्नो मनसि समावेशो न श्रद्धामात्र विषयोऽपि तु युक्ति सिद्ध इत्युपपादयति स यदा मनसेत्यादि। स उच्चारयिता पुरुषो यदा यस्मिन्काले मनसा अहं मंत्रान् उच्चारयेयमित्येवं क्रमेण मनस्यति मनुते विचारयति। अथ तदनन्तर विचारकरणानन्तरमेवाधीते मंत्राणामुच्चारणं करोतीत्यर्थः। कर्माणि कुर्वीयाथ कुरुते अहं कर्माणि करवाणीति मननानन्तरमेव कर्माणि अनेकानि करोति। पुत्रांश्च पशूँश्चेच्छेयेत्यथेच्छति। इमं च लोकममुं च लोकमिच्छेयेत्यथेच्छते। पुत्रान्पशूंश्चेच्छये। अमुं लोकं परलोकमिमं च लोकं इच्छेयमिति मननान्तरमेवेच्छां करोति। मनो ह्यात्मा आत्मनि कर्तृत्वं भोक्तृत्वादिकं च सर्वमेव मनसोऽधीनं यतः मनसः सत्वे एव स कर्ता भोक्ता भवति। मनसोऽभावे कर्ता भोक्ता चात्मा न भवति। स्वतस्तस्याकर्तृत्वात् अतो भवति। ( मनोह्यात्मेति ) मनो हि लोकः सति मनसि लोको भवति। अतो मनोलोक इति कथ्यते। मनो हि ब्रह्म वागादि सर्वापेक्षया मनसि गुणतो बृहत्वात् मनो ब्रह्म भवति। यस्मात्कारणात् सर्वं मनसो व्यापाराधीनं तस्मात् कारणात् मन उपास्वेति। मनस एवोपासनं कुरु इत्यर्थः ॥ १ ॥

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
तृतीयः खण्डः ॥३॥

## अथ सप्तमाध्यायः चतुर्थः खण्डः ।

संकल्पो वाव मनसो भूयान् यदा वै संकल्पयतेऽथ मनस्य-

(स य इत्यादि) यः पुरुषो मनस उपासनं ब्रह्म बुद्ध्या करोति तस्य पुरुषस्य यावत्पर्यन्तं मनसो गमनं तावत्पर्यन्तमस्योपासकस्य यथा कामचारो भवति । स्वेच्छया गमनं भवतीति । अन्यत्सर्वं पूर्ववदेवासेयमिति ॥ २ ॥

इति छान्दोग्योग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

मनोऽपेक्षया कश्चिदन्यो भूयो विद्यते न वेति शिष्य प्रश्नेऽस्ति मनोऽपेक्षयाप्यधिकः स च संकल्प इति सोपपत्ति दिदर्शयिषु र्गुरुराह ( संकल्पो वा मनसो भूयानिति ) हे नारद ! मनोऽपेक्षयाऽधिकः संकल्पः तत्र नामत आरभ्य संकल्प पर्यन्तं पूर्वं पूर्वं कार्यमुत्तरोत्तरं कारणमित्युत्तरस्य भूयस्त्वमिति दर्शयितुमाह ( यदावै इत्यादि ) अयं च संकल्पोऽपि अन्तःकरणस्य वृत्ति विशेषः । यदा यस्मिन् काले इदं कर्तुमुचितमिदं कर्तुं नोचितमित्येवं संकल्पयति । अथ तदा मनस्यति इदं कर्तव्यमित्येवं मन्यते । अथ तदनन्तरं वाचमीरयति वाचं वागिन्द्रियं प्रेरयति मनः तत् वागिन्द्रियं नाम्नि ईरयति शब्दोच्चारणाय नियोगं करोति । तां वाचमुनाम्नि नाम्न उच्चारण निमित्तं विवक्षां कृत्वा ईरयति प्रेर-

त्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥१॥

तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि । समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाऽऽकाशं च समसंकल्पन्ताऽऽपश्च तेजश्च । तेषां संक्लृप्त्यै वर्षं संकल्पते। वर्षस्य संक्लृप्त्या अन्नं संकल्पते। अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते । प्राणानां संक्लृप्त्यै

यतीत्यर्थः । ततश्च नाम्नि नाम सामान्ये मन्त्राः शब्दसमूहात्मकाः सन्त एकं भवन्ति तत्रान्तर्भूता भवन्ति । सामान्येव स्तुति विशेषाणामन्तर्भावस्य लोक सिद्धत्वात् मंत्रेषु कर्माणि अन्तर्भवन्तीत्यर्थः । प्रयोग समवेतार्थ स्मारका मंत्रा इति लक्षणात् मंत्र प्रकाशितान्येव कर्माणि नामंत्रकाणीति ॥ १ ॥

तानि ह एतानि नाम वाङ्मनांसि संकल्पैकायनानि संकल्प एकमयनं मार्गो येषां तानि संकल्पैकायनानि संकल्पकाधीनानीत्यर्थः । संकल्पात्मकानि तानि नामादीनि तत्र संकल्प आत्मा कर्ता येषां तानि संकल्पात्मकानि संकल्पकर्तृकाणीत्यर्थः । संकल्पे प्रतिष्ठितानि नामादीनि । संकल्पे एव वर्तमानानीत्यर्थः । सति संकल्पे नामादीनि भवन्ति । संकल्पाभावे तानि न भवन्ति । अतो नामादीनि संकल्पाधीनसत्ताकानि । यथा मृदः सत्वे घटादीनि भवन्ति । मृदोऽभावे च न भवन्ति । तद्वत् प्रकृतेपीति सुष्ठूक्तं संकल्पे प्रतिष्ठितानि नामादीनीति ( समक्लृपतां द्यावा पृथिवीति ) द्यौश्च पृथिवी चोभे अपि आवां निश्चलतया वर्तावहे । एवं प्रकारेण संकल्पमकुरुतामित्यर्थः । समवकल्पेतां वायुश्चाकाशश्च । एवं वाय्वाकाशावपि स्वेन रूपेणावां वर्तावहे इत्येवं रूपेण संकल्पं कृतवन्तावित्यर्थः । समवकल्पन्तामापश्च तेजश्च इमावपि यथायोगं संकल्पमकुरुतामित्यर्थः ।

**मंत्राः संकलपन्ते । मत्राणां संक्लृप्त्यै कर्माणि संकल्पन्ते । कर्मणां संक्लृप्त्यै लोकः संकल्पते । लोकस्य संक्लृप्त्यै सर्वं संकल्पते । स एष संकल्पः । संकल्पमुपास्स्वेति ॥२॥**

**स यः संकल्पं ब्रह्मेत्युपास्ते संक्लृप्तान्वै स लोकान् ध्रुवान्**

संकल्पाभावे यथोक्त रूपेणैतेषां प्रवृत्तेरभावात्। तेषां संक्लृप्त्यै वर्षं सङ्कल्पते । तेषां द्यावापृथिव्यादीनां संक्लृप्त्यै संकल्प हेतुकं वर्षं संकल्पते समर्थो भवति। अप्तेजसोरधीनत्वात् वर्षणस्येति, वर्षस्य संक्लृप्त्या अन्नं संकल्पते। वर्षस्य संकल्पनिमित्तमन्नं जायते। अन्नस्य वर्षणाधीनत्वादिति। अन्नस्य संक्लृप्त्यै प्राणाः संकल्पंते। अन्नमयत्वात् प्राणानाम्। अन्नेन हि प्राणः समृद्धो भवतीत्यर्थः। प्राणानां संक्लृप्त्यै मंत्राः संकल्पन्ते। प्राणवन्तः समर्था एव मंत्रानुच्चारयन्ति। अतः प्राणाधीना मंत्रा इति। मंत्राणां संक्लृप्त्यै कर्माणि संकल्पंते। तत्र कर्माणि अग्निहोत्रादीनि मंत्राधीनानि भवन्ति। मंत्रजन्य स्मृतिमूलका नुष्ठानत्वादिति कर्मणां संक्लृप्त्यै लोकः संकल्पते। तत्रकर्मणामग्निहोत्रादीनां संक्लृप्त्यालोकः फलं स्वर्गादिकं संकल्पते भवति। कर्माधीन सिद्धिकत्वात स्वर्गादि फलानाम् तत्र लोक्यते भुज्यते इति लोकः स्वर्गादिः कर्मणा जायमानः अग्निहोत्रादि शुभकर्मानुष्ठायिनामेव स्वर्गादि लोकोत्पत्तिदर्शनादिति। लोकस्य संक्लृप्त्यै सर्वं संकल्पते। लोकस्य स्वर्गादि फलस्य संक्लृप्त्यै सर्वं जगत्संकल्पते। सर्वस्यापि भूतसमुदायस्य स्वर्गादि फलकामत्वात्। स एषः संकल्पः एतदिदं सर्वमपि यत्फलावसानं तत् सर्वमपि संकल्पमूलकम्। अतः सर्वापेक्षया संकल्पो भूयात् अतः संकल्पमुपास्व। संकल्पस्योपासनं सर्वथा कुरु, सर्वापेक्षया एतस्यैव विशिष्टत्वादिति ॥ २ ॥

ननु अचेतनेषु नामादिषु कथं संकल्पोदयः संकल्पस्य चेतने एव दर्शनादिति चेन्न स्तुत्यर्थत्वात्। संकल्पस्य एतावता संकल्पस्य स्तुति निरू-

**ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति। यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति संकल्पाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥३॥**

**इति छान्दोग्योपनिषदः सप्तमाध्यायस्य**
**चतुर्थः खण्डः ॥४॥**

पिता भवति। इत्थं भूतो हि भागः संकल्पो यो ऽचेतनमपि व्याप्नोति का कथा सचेतने संकल्पस्य वृत्तित्वे। अथवा अचेतनेषु नामादिषु चेतनतामारोप्य संकल्पकथनस्यापि संभवात्। यद्वा नामादिकं तदभिमानि देवतापरकं तथा च देवतानां सर्वासामेव सचेतनत्वात् भवति। तत्र संकल्प संभावनमिति कृत्वा सर्वमुपपद्यते न कोपि दोषः पदमादधातीति। संकल्पस्य फलं दर्शयितुमाह (स यः संकल्पं ब्रह्मेत्युपास्ते इत्यादि) यः कोपि उपासकः संकल्पात्मक ब्रह्मण उपासनं करोति सः संक्लृप्तान् संकल्पसिद्धान् लोकान् स्वर्गादि फलात्मकान् ध्रुवान् नित्यान् आपेक्षिक नित्यान् प्रतिष्ठितान् सर्वप्रकारक भोगोपकरणैः सुसज्जितान् अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदमिति वचनात्। अव्यथमानान् शत्रुहिंसकादि पीड़ारहितान् स उपासकः स्वयमपि ध्रुवो निश्चलः प्रतिष्ठितः स्थिरः अव्यथमानः सर्वबाधा विवर्जितः सन् अभिसिद्ध्यति प्राप्नोति। अन्यत् सर्वं पूर्ववत्। संकल्पगतिपर्यन्तमुपासकस्यापि यथा कामचारो भवति। तस्मात् संकल्पात्मक ब्रह्मोपासनं विधेयम्। संकल्प एव नामादिभ्यो भूयानिति। अस्ति भगवः संकल्पाद्भूय इत्यादि प्रकरणं यथापूर्वं व्याख्येयम्। विशेषाभावादिति ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

# अथ सप्तमाध्यायः पञ्चमः खण्डः ।

चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथ संकल्पयतेऽथ मनस्यति अथ वाचमीरयति तामु नाम्नीरयति नाम्नि मंत्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥१॥

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वानुनेत्थमचित्तः स्यादि-

( चित्तं वाव संकल्पाद्भूय इत्यादि )। एकमपि अन्तःकरणं वृत्तिभेदाच्चतुः प्रकारकं भवति। तत्राभिमानात्मक वृत्तिविशिष्टस्याहंकार इति संज्ञा भवति। संकल्पात्मक वृत्तिविशिष्टं मनः निश्चयात्मक वृत्ति विशिष्टस्य बुद्धीति संज्ञा। तथा चित्तात्मक वृत्तिविशिष्टं चित्तम् प्राप्त कालानुरूपातीता नागतविषयप्रयोजन चिन्तात्मक वृत्तिविशिष्टं चित्तम्। तच्चित्तं संकल्पादपि भूयोऽधिकम्। कथं संकल्पापेक्षया चित्तस्याधिकत्वमिति स्वयमेव श्रुतिर्दर्शयति "यदा वै चेतयते इत्यादि"। यदा खलु समागतं वस्तु इदमेवं प्रकारेण प्राप्तमिति चेतयते तदा दातुं हातुं वा संकल्पं करोति। तदन्तरं मनस्यति इत्यादिकं सर्वं पूर्ववदेव ज्ञातव्यम्॥ १ ॥

( तानि ह वा इत्यादि )। तानि संकल्पादीनि कर्मफल पर्यन्तानि चित्तैकायनानि। चित्तमेवैकमयनं येषां तथा भूतानि चित्तात्मानीत्यादि पूर्ववदेव व्याख्येयानि। संकल्पाद्यपेक्षया चित्तस्य माहात्म्यातिशयं दर्शयितुमाह 'तस्मात् यद्यपीत्यादि' यस्मात् कारणाच्चित्तं संकल्पादीनां कारणं तस्मात् अनेक शास्त्रविषयक ज्ञानवानपि पुरुषो यदि विषय प्रयोजन निरूपण लक्षण चित्त विहीनो भवति। तदा तादृशमपि पुरुषं लोका नायमस्तीति कथयन्ति। तदीयं शास्त्रविषयक ज्ञानं विद्यमानमपि। अविद्यमानमेवेति कथयन्ति। तत्र युक्तिमपि दर्शयन्ति। यद्ययं बहुशास्त्र

स्यथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते चित्तं ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥२॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमाना न व्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य

पञ्चमः खण्डः ॥५॥

## अथ सप्तमाध्यायः षष्ठः खण्डः ।

**ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं**

विषयक ज्ञानवान् भवेत्तदा कथमचित्तः स्यादिति । अथ यदि अल्प ज्ञानवानपि कदाचिच्चित्तवान्भवति तदा तत्समीपे बहवो जनाः शास्त्रं श्रोतुं तत्समीपमागच्छन्ति । तस्माच्चित्तोपासनं ब्रह्मबुद्ध्या विधेयमिति । अन्यत् सर्वमतिरोहितार्थम् । अस्ति भगवः चित्ताद्भूय इत्यादिकं पूर्ववदेव व्याख्येयम् ।। २–३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

( ध्यानवावेत्यादि ) । ध्यानं खलु चित्ताच्चित्तापेक्षया भूयोऽधिकम् । तत्र ध्यानं नाम विजातीय प्रत्ययेनानन्तरितमेकजातीयस्यानुचिन्तनम् । चित्तस्यैकतानत्वमित्यर्थः । यथा कमपि स्वाभिलषितं देवादिकं स्वमनसि

**ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देव मनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः**

कृत्वा तस्यैव सर्वदा अनुचिन्तनम् । एतच्च ध्यानम् । एतस्य ध्यानस्याङ्गम् आसीनत्वादिकम् । आसीनस्य निश्चलत्वसंभवात् । आसीनस्यैव चित्ताग्रता भवति ! न तु स्थितौ गतौ वा निश्चलता प्रयत्नान्तर सापेक्षकत्वात् । यथा योगी ध्यानं कुर्वन् निश्चलो भवति, एवं पृथिव्यादयोऽपि ध्यान लक्षणस्य माहात्म्य प्रख्यापनार्थं निश्चलाः सन्तो ध्यानं कुर्वन्त इव लक्ष्यन्ते । तस्मात् ध्यानं माहात्म्य कारणम् । तस्मादिदं ध्यानं चित्ता-पेक्षयाऽधिकम् । ध्यायतीव पृथिवी । इयं पृथिवी निश्चला सती ध्यानं कुर्वतीव लक्षिता भवति । ध्यायन्तीव देव मनुष्याः ध्यानं कुर्वन्त इव लक्ष्यंन्ते । देवाश्च मनुष्याश्च । अथवा देव सदृशा मनुष्या देव मनुष्याः । ध्यानस्य माहात्म्य विशेषं दर्शयितुमाह 'तस्माद्य इहेत्यादि' । यस्मात्कारणात् एवं विशिष्टं ध्यानं तस्मात् इह लोके ये मनुष्याणां मध्ये महत्तां धनादिना विद्यया महत्त्वं प्राप्नुवन्ति । ते महत्त्वशालिनोऽपि नराः ध्यानापादांशा इव । ध्यानस्यापादानमापादो ध्यान फललाभः तेषां ध्यानापादानां ध्यातॄणां ते महत्त्वशालिनो नरा अंशा अवयवा इव । यथा ते ध्यातारो ध्यानमाहात्म्यान्निश्चला अत्यल्प वचना भवन्ति । तथा ते महान्तोऽपि अवचनतया ध्यातृसादृश्यं लभन्ते । अंशत्वं च तन्न्यूनत्वे सति तत्सदृशत्वम् । यतो लोके धनादिना महान्तोपि पुरुषा ध्यातॄणामंशा एव तस्मात्कारणात् ध्यानमतीव श्रेष्ठमिति ध्यान माहात्म्यं दर्शितम् । अतो ध्यानं चित्ताद्भूय इति । अथ ये एव हि बिपरीता अल्पाः क्षुद्रा भवन्ति, धनादि माहात्म्यैक देशमप्राप्ता भवन्ति ते तु कलहिनः । निरर्थकं कलहकर्तारो भवन्ति । अथ च पिशुनाः परदोषा-णामुद्भावका भवन्ति । तथा उपवादिनः उप समीपे परदोषस्य वदनशीला

पिशुना उपवादिनस्ते ऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥१॥

स योध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति। यो ध्यानं ब्रह्मे त्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

## अथ सप्तमाध्यायः सप्तमः खण्डः।

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं

वावदूका भवन्ति। परकीयं दोषं तत्समीपे एव वदन्ति। तादृशा उपवादिनो भवन्ति। अथ ये प्रभवो ध्यानापादांशा इहैव ते भवन्ति। ये तु प्रभवो धनादिना महान्तस्ते ध्यातृणां पादा अंशा इव अजल्पकाः सन्तो ध्यातृणां सदृशा भवन्ति। यस्मादेवं विधं माहात्म्यं ध्यानस्य ध्यानबलाद् ध्यातुश्च भवति। तस्मात् कारणात् ध्यानमुपास्वेति ध्यानस्यैवोपासनं कुरु इति ॥ १ ॥

स यः पुरुषो ध्यानस्य ब्रह्मबुद्धया उपासनं करोति स श्रुत्युक्तं फलं प्राप्नोतीत्यादिकमाखण्डान्त प्रकरणं सरलतया पूर्ववदेव व्याख्यातव्यम्। अस्ति भगव इत्यादिकं पूर्ववदेव व्याख्येयम् ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

( विज्ञानं वावध्यानाद्भूय इत्यादि )। तत्र विज्ञानं नाम शास्त्रार्थ विषयकं प्रमाण जनितानुभवात्मकं ज्ञानम्। तादृशानुभवात्मक ज्ञानस्य

विजानाति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहास-पुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाको वाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाँश्च मनुष्याँश्च पशूँश्च वयांसि च तृणवनस्पतीञ्छ्वापदान्या कीट पतंग पिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति। विज्ञानमुपास्स्वेति ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिध्यति यावद् विज्ञानस्यगतं तत्रास्य यथा कामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति

स्मृतिधारा रूप ध्यानं प्रति कारणत्वात् भवति। विज्ञानं ध्यानाद्भू-योऽधिकमिति। प्रथममनुभवात्मकं ज्ञानं ततः संस्कारस्ततस्मृतिरिति अनुभव-स्मृत्यो जन्य जनकत्वेन व्यवस्थितत्वात् ध्यानविज्ञानयोः कार्यकारणभावात् विज्ञानजन्यत्वं ध्यानस्येति कारणं विज्ञानं विज्ञानं कार्यात् ध्यानादधिकं भवतीति सुष्ठूक्तं विज्ञानं वाव ध्यानाद्भूय इति। विज्ञाने वा ऋग्वेदादिकं विजानाति। अन्यत्सर्वं पूर्ववदेव व्याख्येयं यस्मात् एवं प्रकारकं महामहिम-शालि विज्ञानं तस्मात् कारणात् हे नारद! विज्ञानं ब्रह्म बुद्ध्योपासनीयम्! तस्यैवोपासनं कर्तव्यमित्यर्थः। विज्ञानोपासनस्य फलं दर्शयति ॥ १ ॥

( स यो विज्ञानमित्यादि ) येषु येषु लोकेषु विज्ञानं शास्त्रार्थ विषयकं प्रमाणजनित ज्ञानं विद्यते। तान्विज्ञानवतो लोकान् ज्ञानवतश्चाभिसिद्ध्यति

भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

## अथ सप्तमाध्यायः अष्टमः खण्डः ।

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति ।

प्राप्नोति विज्ञानोपासक इति यावद्विज्ञानस्य गतमित्यादि प्रकरणं पूर्ववदेव व्याख्येयम् ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

( बलं वावेत्यादि ) बलं हि विज्ञानाद्भूयोऽधिकम् गुणै महत्वात् बलं नाम व्रीहि यवादि भक्षणजनित मनसा ज्ञातव्ये घटादि विषये प्रतिभान सामर्थ्यम् । यो हि अन्नभक्षणं न करोति तदर्थं "ऋगादानि न वै मा प्रतिभांति इति श्रुतौ प्रतिभानासामर्थ्यस्य प्रतिपादनात् प्रतिभान सामर्थ्यमेव बलम्–तदेव बलं शरीरादिनामुत्थाने कारणं भवति । तदेव दर्शयति शतमित्यादि । शतं विज्ञानवतां विज्ञानवतामनेकमपि एकः शारीरक मानस बलवान् आकंपयति यथा एकोपि मत्त वृषभादिरनेकमाकंपयति । मनुष्योऽप्येको बलवान्दुर्बलान् बाधते । यस्मादेव मन्नाद्युपभोगजनितं महत्त्वास्पदं तस्मात् स पुरुषो यदा बली बलवान् भवति अथ तदा उत्थाता उत्थानादि क्रिया सुप्रवृत्तो भवति । उत्तिष्ठन् परि-

विज्ञाता भवति । बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृण वनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥

स यो बलं ब्रह्मेत्युपास्ते यावद् बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य अष्टमः खण्डः ॥८॥

चरिता भवति । उत्थानसमर्थ एवोत्थायाचार्यादीनां परिचरिता शुश्रूषायाः कर्ता भवति । परिचरन् शुश्रूषां कुर्वन् उपसत्ता आचार्यादीनां समीपगतो भवति । उपसीदन् आचार्यं समीपमुपगत आचार्यादीनां द्रष्टा भवति । ततश्च गुरु प्रतिपादितार्थस्य श्रोता श्रवणकारको भवति । तदनन्तरं तदुक्तार्थस्यानेक हेतु द्वारा मंता मननकर्ता भवति । ततश्च बोद्धा भवति । मननानन्तरं मन्वानो बोद्धा भवति । ततो निश्चयकरणानन्तरं गुरूपदिष्टार्थस्य कर्ता अनुष्ठानकरो भवति । विज्ञाता भवति । अनुष्ठान फलस्यानुभवं कर्ता भवति । एतदतिरिक्तमपि बलस्य माहात्म्यं तदेव दर्शयति बलेनेत्यादि । बलेन पृथिवी तिष्ठति । बलवशादेव पृथिव्या अवस्थानमित्यर्थः । एवं बलेनान्तरिक्षमित्यारभ्य बलेन लोकस्तिष्ठतीत्येतत्पर्यन्त प्रकरणमतिरोहितार्थम् ॥ १ ॥

यस्मादेतादृश माहात्म्यकं बलं तस्मात् ब्रह्म बुद्ध्या बलोपासनमेव कर्तव्यमित्यादि पूर्ववत् ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य

अष्टमः खण्डः ॥ ८ ॥

# अथ सप्तमाध्यायः नवमः खण्डः ।

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्युह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथाऽन्नस्याऽऽये द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिद्ध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो

( अन्नं वाव बलाद्भूय इत्यादि )। अन्नमोदनादिकं बलाद् बलापेक्षया भूयोऽधिकम् । अन्नस्य बलसम्पादकत्वमन्वयव्यतिरेकाभ्यां सिद्धमतो बलाद्भूयमधिकमन्नमोदनादिकम् । अन्नस्य बल हेतुत्व मन्वयव्यतिरेकाभ्यां साधयितुं दर्शयति । ( तस्माद् यद्यपीत्यादि )। यस्मादन्नस्य बलहेतुत्वं तस्माद्यदि कश्चित् दशरात्रीः दशरात्रिपर्यन्तमन्नं नाश्नीयात् भोजनं न करोति तदा बलकारणान्न भोजनाभावात् बलह्रासात् म्रियते । अथ कदाचिज्जीवति मासपर्यन्त व्रतादेः शास्त्रे विधानात् । तदा जीवन्नपि बलाभावात् अद्रष्टा भवति । गुर्वादीनां द्रष्टा न भवति ! यदा गुर्वादिकं न पश्यति तदा तदुपदिष्टवाक्यस्य श्रोता न भवति । ततोऽमन्ता अबोद्धा अविज्ञाता भवति । यदा बहुदिनपर्यन्तमभुंजानो दर्शनक्रियादिष्वसमर्थोऽपि यदि अन्नस्योदनादेः आयवान्भवति अन्नं लभते तदुपभोगं करोति । तदा पुनर्बल प्राप्तौ पुनरपि द्रष्टा श्रोतादिर्भवति । अतोऽन्वयव्यतिरेकाभ्यामन्नस्यौदनादेः बलकारणत्वं व्यवस्थितं भवति अतोऽन्नमुपास्व ॥ १ ॥

अन्नमेव ब्रह्मबुद्ध्या उपास्वेति स योऽन्नं ब्रह्मबुद्ध्योपासते तस्य

भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्ना-
द्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
नवमः खण्डः ॥९॥

# अथ सप्तमाध्यायः दशमः खण्डः ।

आपो वा अन्नाद्भूयस्यस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टि र्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहुभविष्यतीत्याप एवेमा मूर्ताः येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत्पर्वता यद्देवमनुष्या

यथोक्तं फलं भवतीत्यादिकं सर्वं पूर्ववदेवेति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
नवमः खण्डः ॥९॥

( आपो वावेत्यादि ) । आपो जलानि अन्नाद्भूयस्योऽधिका भवन्ति । अन्नजनकत्वात् जलस्य अद्भ्यः पृथिवीति श्रुतेः कार्यात्कारणमधिकं भवतीति नियमात् जलमन्नापेक्षया भूयोऽधिकमिति । यत एवं तस्मादेव-कारणात् यदा यस्मिन्काले देशे वा सुवृष्टिः शोभना शस्योपकारिणी वृष्टि र्जलवर्षणं मेघात् न भवति । अथ प्राणाः प्राणवन्तो जीवाः स्थावर जङ्गमात्मकाः व्याधीयन्ते व्याधियुक्ता भवन्ति । जलाभावे महामार्यादि-विविध व्याधीनां सम्भवात् जलाभावे दुःखिनो जीवा भवन्तीत्यर्थः । अत्र प्राण पदोपादानात् प्राणस्य जलजन्यत्वमावेदयति । आपोमयः प्राण इति श्रुतेः । कथं दुःखिनो भवन्ति प्राणिनो जलाभावे तत्राह— (अन्नं कनीयो भविष्यतीति ) । अहो अस्मिन् वर्षे वर्षणाभावान्नः

**यत्पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीट पतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति ॥१॥**

**स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामांस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति । योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥**

**इति छादोग्योपनिषदः सप्तमाध्यायस्य दशमः खण्डः ॥१०॥**

अस्माकं कनीयमत्यल्पं ब्रीहि यवादिकमन्नं भविष्यतीति मन्यमाना दुःखिनो भवन्ति । अन्नोत्पादनद्वारा जलस्योपयोगित्वं साक्षादपि जलस्य प्राण्युपकारकत्वमतोऽन्नापेक्षया जलस्याधिकमाहात्म्यमिति । अथ यदा सुवृष्टिरन्नोपकारिणी शोभनावृष्टिर्भवति तदा अनेन जल वर्षणेन नोऽस्माकं बहु प्रभूतमन्नमस्मिन्वर्षे भविष्यतीति मन्यमानाः प्राणाः प्राणिनो जीवा आनन्दिनो हृष्टाः सुखबहुला भवन्ति । तस्मादन्वयव्य-तिरेकाभ्यामन्नकारणत्वाज्जलमन्नाद् भूय इति । आप एवेमा मूर्ताः जल-जन्यत्वादन्नस्यापो जलान्येव इमाः परिदृश्यमाना मूर्तामूर्त विशेषाकार-परिणताः या खलु इयं सर्वाधारभूता पृथिवीति । एवमन्तरिक्षमित्यादिक-मपि व्याख्येयम् । यस्मादेवं विद्या आपस्तस्मादप उपास्व जलोपासनमेव विधेयम् इति ॥१॥

जलोपासनायाः फलं दर्शयितुमाह ( स योऽपो ब्रह्मेत्यादि ) स य उवासको जलं ब्रह्मबुद्ध्योपासते तदुपासनां करोति स सर्वान् कामान् प्रानोति तृप्तिमांश्चापि भवतीति । अन्यत्सर्वं पूर्ववदेव ज्ञातव्यमिति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य

दशमः खण्डः ॥१०॥

# अथ सप्तमाध्यायः एकादशः खण्डः ।

**तेजो वा अद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥**

( तेजो वा अद्भ्यो भूय इत्यादि ) । अद्भ्यो जलेभ्यो भूयोऽधिकं तेजः तेजसो जलकारणत्वात् वायोरग्निरिति श्रुत्यन्तरादपि जलस्य तेजो जन्यत्वं तस्माददभ्यस्तेजोऽधिकम् । तद्वा तस्मादप्कारणत्वादेव हेतोरेतत्तेजो यदा वायुं स्वात्मना आगृह्य अवष्टभ्यनिश्चलीकृत्य आकाशमभितपति । गगनमभिव्याप्य तपति । तस्मिन् काले लौकिका एवं आहुर्वदन्ति । किं वदन्ति तत्राहुः निशोचति नितरामतिशयेन शोचयति । नितपति नितरामतिशयेन तपति वर्षिष्यति वै । एवं वदन्ति लौकिका इति । यतस्तेजोऽपः कारणं तस्मात्तेज एव पूर्वं प्रथमतः स्व स्वरूपं दर्शयित्वा । अथ पश्चादनन्तरम् अपो जलं सृजते उत्पादयतीत्यर्थः । अतो जलकारणत्वाज्जलापेक्षया तेजोऽधिकम् । अपि च तत्तस्मात् तेजसोऽप् जनकत्वादेव । एतत् इदानीमपिकाले ऊर्ध्वाभिरूर्ध्वं प्राताभिः तिरश्चीभिश्च तिर्यग्गताभिः विद्युद्भिः सह ह्लादाः मेघ शब्दाश्चरन्ति भवन्ति । तस्मादाहुः तद्दर्शनादेव मेघ शब्द श्रवणात् । इदानीमपि लौकिकाः कथयन्ति । विद्योतते स्तनयति वर्षिष्यति वेति । अतो जल कारणात्मकं तत्तेजः पूर्वं प्रथमतः स्वात्मानं दर्शयित्वा अथ पश्चात् अपः सृजते उत्पादयति जले तेजः अतोऽपांकारणं तेज उपास्वेति ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति । यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
एकादशः खण्डः ॥ ११ ॥

## अथ सप्तमाध्यायः द्वादशः खण्डः ।

आकाशो वाव तेजसो भूयानाकाशे वै सूर्या-चन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाऽऽह्वयत्याकाशेन

इदानीं तेज उपासनायाः फलं दर्शयति ( स य तेजो ब्रह्मेत्युपास्ते ) इत्यादि । स यः पुरुषः जलकारणं तेजो ब्रह्मबुद्ध्योपास्ते स तेजस्वी भवति । तथा तेजस्वतो लोकान् भास्वतो भासमानान् प्रकाशविशिष्टान् अपहत तमस्कान् बाह्याभ्यन्तर तमोरहितान् लोकान् अभिसिद्ध्यति प्राप्नोति स्वयमपि तेजस्वी सन्नित्यादिकं प्रकरणपर्यन्तं पूर्ववदेव ज्ञातव्य-मिति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
एकादशः खण्डः ॥ ११ ॥

( आकाशो इत्यादि ) । आकाशो नामावकाशप्रदः भूतानां पंचमः सचाकाशो वायु सहितस्य तेजसो जनकतया भूयानधिको महानित्यर्थः । कारणं च कार्यापेक्षया भूय एव भवति । यथा घटादि कार्यापेक्षया तत्कारणं मृत्तिका अधिकमिति । कथमधिको भवति । वायुसहितस्य

**शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥**

**स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति**

तेजस आकाश इति। शंकायामाह—( आकाशे वै इत्यादि )। आकाशे वै सूर्याचन्द्रमसौ। इमावुभावपि तेजोरूपौ तथा विद्युत् नक्षत्राणि अग्निश्च तेजः स्वरूपाणि एतानि आकाशे अर्थात् आकाशस्यान्तर्मध्ये एव तिष्ठन्ति। यद्वस्तु यस्यान्तः याति तत् तदपेक्षया अल्पं भवति। यथा घटान्तः याति बदरामलकम्। इतरदधिकं यथा बदरापेक्षया घटो ह्यधिकः एवमत्राकाशमध्यवर्ति वायुसहितं तेजोऽल्पमधिकश्चाकाशः। अपि च आकाशेनाह्वयति। एको हि यदन्यमाह्वयति तदेतदाकाश साध्यमेव तदभावे आह्वानादि कार्यासम्भवात्। एवमाहूतश्चाकाशेनैव शृणोति एवमन्योक्तमन्य आकाशेनैव प्रतिकरणोति। तथा चाह्वानश्रवण-प्रतिश्रवणानि सर्वाण्यपि कार्याणि आकाश साध्यानि एव भवन्ति। तथा आकाशे एव रमते सर्वोप्यन्योन्यमाकाशे एव रमते क्रीडां सम्पादयति। तथा आकाशेन रमते शोचन्नपि जन आकाशे एव भवति। तथा आकाशे एव जायते जायमानोऽङ्कुरादिः न तु आवृते देशे कस्याप्युत्पत्तिर्भवति। आकाशमभिजायते। समुत्पाद्यमानो हि घटादि-राकाशमभिलक्ष्यैव प्रतीक्ष्यैव जायते नतु प्रतिलोमं जायते। एतादृश महिमशाली आकाशोऽत आकाशमुपास्व। आकाशस्यैवोपासनं कुरु नतु नामादीनां तेषामाकाशे एवान्तर्भूतत्वादिति ॥ १ ॥

इदानीमाकाशोपासनस्य फलं दर्शयति ( स य आकाशमित्यादि ) स यो व्यक्तिविशेषो यथोक्ताकाशस्य ब्रह्मबुद्ध्योपासनं करोति।

**यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति छान्दोग्योपनिषदः सप्तमाध्यायस्य**
**द्वादशः खण्डः ॥ १२ ॥**

## अथ सप्तमाध्यायः त्रयोदशः खण्डः ।

**स्मरो वावाकाशात्भूयस्तस्माद्यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन्**

आकाशवतो विस्तारयुक्तान् । आकाशो हि व्यापक इव । अतो विस्तृतान् प्रकाशवतः प्रकाश युक्तान् लोकान् । तथा असंवायान् अन्योन्य पीड़ारहितान् उरुगायवतः विस्तीर्ण गतिकान् कीर्तिमतो लोकानित्यर्थः एतादृश लोकान् स अभिसिद्ध्यति प्राप्नोतीति । यावदाकाशस्य गतमित्यादि प्रकरणं पूर्ववदेव व्याख्येयम् ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

( स्मरो वावेत्यादि )। स्मरो नाम स्मरणम्, अन्तःकरणस्य धर्मविशेषः तादृशः स्मर आकाशाद्भूयोभूयान् अधिक इत्यर्थः । अत्र छान्दसत्वात् लिङ्गव्यत्ययो ज्ञातव्यः । आकाशादिकं सर्वभोग्यं एतत्सर्वं स्मरणवतो भोग्यत्वात् तदैव सप्रयोजनं यदा स्मर्तुः पुरुषस्य स्मरणं भवेत् । स्मृत्यभावे एते सन्तोऽपि असन्त एव कार्याकारित्वात् यथा प्रयोजनानुपयुक्तं गृहो विद्यमानमपि धनमधनमेवेतिवत् । नहि स्मरणाभावे आकाशादीनां सत्वमपि ज्ञातुं न शक्नोति तस्मात्स्मरण-

**यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान्विजानाति स्मरेण पशून् स्मरमुपास्स्वेति ॥ १॥**

**स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इतिस्मराद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति छान्दोग्योपनिषदः सप्तमाध्यायस्य त्रयोदशः खण्डः॥१३॥**

माकाशादिभ्योऽधिकम्। लोकेपि स्मरणस्य महत्त्वं दृष्टं भवति। अतएव यद्यपि कस्मिंश्चिदपि स्थाने बहवो मिलिता आसीरन् उपविष्टा भवेयुः। किंतु न स्मरन्तः स्मरणरहितास्ते परस्परं परस्परस्य कथितमपि न शृणुयुः स्मरणविकला न शृण्वन्तीत्यर्थः। न मन्वीरन् नैवमननं कुर्वन्ति न विजानीरन् न विजानन्ति। यदा वा ते स्मरेयुः मन्तव्यं विज्ञातव्यं श्रोतव्यमर्थजातं तदामन्वीरन् अथ विजानीरन् तस्मात् स्मरणरहिताः श्रवणादि कार्येषु समर्था न भवन्ति। स्मरण सहिताश्च श्रवणादि कार्ये समर्था भवन्ति। अतएवाकाशकार्यस्य श्रवणादेः स्मरणाधीनत्वात् स्मृतेराकाशाद्भूयस्त्वमिति अपि च स्मरेण वै पुत्रान् विजानाति ममैते पुत्रा इति स्मरणेनैव पुत्रादिकं विजानाति तथा स्मरणेनैव पशून् गवादीनपि विजानाति। दृश्यते च लोके कूर्मो हि स्मरणेनैव स्वापत्यानि पालयन्ति पोषयन्ति। न हि कूर्मः स्ववत्सान् अण्डान्निःसृतान् दुग्धादिना पालयति। अपि तु स्मरणेनैव पालयतीत्यत आकाशादिभ्यो महत्स्मरणमेवोपास्व स्मरणोपासनमेव कुरु ॥ १ ॥

( स य ) उपासकः स्मरणोपासनं करोति। इत्यादिकं प्रकरणान्तं पूर्ववदेवेति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य त्रयोदशः खण्डः ॥१३॥

# अथ सप्तमाध्यायः चतुर्दशः खण्डः ।

आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राँश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥

स य आशां ब्रह्मेत्युपास्त आशयास्य सर्वे कामाःसमृद्ध्यन्त्यमोघा हास्याऽऽशिषो भवन्ति यावदाशाया गतं तत्रास्य यथा कामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवा-

( आशावावेत्यादि ) । आशा वा स्मराद् भूयसी अधिका । आशा नाम अप्राप्तवस्तुविषयिणी इच्छा । आशा इच्छा वाञ्छा पर्यायाः । इयं चाशा स्मरणाद् भूयसी । यतोऽन्तःकरणे विद्यमानया आशया स्मर्तव्यं पदार्थं स्मरति । ततः आशयोपस्थापितं विषयजातं स्मरन् अध्ययनादिकं करोति । तस्मात् स्मरणस्याशा मूलकत्वात् स्मरणापेक्षया आशा अधिका भवति । स्मरणस्याशा निमित्तत्वं दर्शयति ( आशेद्धोवैस्मरो इत्यादि ) आशया फलविषयिण्येच्छया इद्ध प्रदीपितः उत्पादितः स्मरः स्मरणम् इष्टसाधनताविषयकं अध्ययनं मन्त्रादीनां करोति । तथा कर्माणि अग्निहोत्रादीनि इच्छति । किंच फलाशया प्रेरित एव पुत्र पश्वादिकमिच्छति । इह लोकविषयकेच्छापि भवति । आशा स्मरणाद् भूयसी । तस्मादाशामुपास्स्वेति ॥ १ ॥

स यः पुरुष आशां ब्रह्मबुद्ध्योपास्ते अस्योपासकस्याशया समुपासितया आशया सर्वे कामाः कमनीय पदार्थाः समृद्ध्यन्ति समृद्धा भवन्ति । अपि चास्योपासकस्य आशिषः प्रार्थना अमोघाः सफला भवन्ति ।

न्ब्रवीत्विति ॥ २ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
चतुर्दशः खण्डः ॥ १४ ॥

## अथ सप्तमाध्यायः पञ्चदशः खण्डः ।

**प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितं प्राणः प्राणेन**

यावदाशायागतमित्यादिकं प्रकरणं पूर्ववदेव व्याख्येयमिति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
चतुर्दशः खण्डः ॥ १४ ॥

( प्राणो वावेत्यादि ) तत्र प्राणः प्राण सहचरितः । प्राणोपलक्षितो जीवात्मा इत्यर्थः । प्राण पदेन जीवस्योपलक्षणम् अयमभिप्रायः । अत्र प्राण पदेन प्राणिनो जीवस्य ग्रहणमभिप्रेतम् । अत्रैव व्याधीयन्ते प्राणाः आनन्दिनः प्राणा भवन्ति । एवं प्रकारेण पूर्व प्रकरणे प्राणपदेन प्राणिन एव ग्रहणात् । अन्यथा व्याध्यानन्दादि चेतन धर्माणामचेतने कथनं सर्वथैवानुपयुक्तं स्यात् । एवमिहापि आशां प्रति प्राणस्याधारत्वमभिसंधय वक्ष्यति एवमस्मिन् प्राणे इति । तस्मादत्र प्राणो जीवो न तु वायु प्रभेदः । एवं "स वा एषपश्यन्नि" त्यादिना चेतनस्यास्याभेद कथनादपि प्राणो जीव एवेति । प्राणो जीव एवेत्यत्र कारणं दर्शयितुमाह ( यथा वा अरा इत्यादि )। यथा येन प्रकारेण रथचक्रस्य अरा रथनाभौ समर्पिता रथनाभ्याश्रिताः, एवमस्मिन् प्राणे प्राणोपलक्षिते सर्वं समस्तमप्यचेतनं भूतजातं चेतनाश्रितम् । भूतमात्राः प्रज्ञामात्रा स्वर्पिता इति श्रुतेः । प्राणो जीवो देवदत्तादि । प्राणेनाश्वादिना करणेन याति गच्छति गमनकर्ता देवदत्तादिरपि जीव एव गमनकरणमश्वादिकमपि

याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक्त्वा-ऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषं

जीव एवेत्यर्थः । प्राणो जीवः देवदत्तादिः प्राणं जीवं गवादिकं ददाति प्रयच्छति तत्र देयं गवादिकमपि जीव एव । एवं प्रतिग्रहीता ब्राह्मणादिरपि जीवेति सर्वं जीव एवेति । किं बहुना प्राणो हि पिता । पितापि जीव एव । प्राणो माता । प्राणो भ्राता । प्राणः स्वसा । प्राण आचार्यः । प्राणो ब्राह्मणः । अर्थात् सर्वोपि प्राण एव । तस्मात् आशाया भूयान् जीव इति ॥ १ ॥

ननु प्राणपदेन जीवात्मक पित्रादेः कथं ग्रहणम् । परिदृश्यमान देहादेरेव पित्रादिपदेन बोधस्य सार्वजनिकस्य दर्शनादेवं यो मन्यते तान् प्रत्याह ( स यदि पितरं वा मातरं वेत्यादि ) । स यदि पित्रादि ब्राह्मण पर्यन्तं जीवन्तं यदि भृशमिवापमानजनकं वचनं ताडनादिकं करोति । तदा तत्रत्याः सज्जनाः तं धिक् कुर्वन्ति । त्वं पितृहा असि । ब्रह्महा असीत्यादि शब्दैः ॥ २ ॥

( अथ यद्यप्येनान् ) । पित्रादीन् उत्क्रान्त प्राणान् जीव रहितान् शूलेन समासं व्यतिदहेत्, निर्जीव पित्रादि शरीरं ताडयति भस्मसात्

**दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥**

**प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्य-**

करोति तदापि कोपि शिष्टोन्यो वा तथा कारिणं त्वं पित्रादिमारकोसीति न कथयति। अतोऽन्वयव्यतिरेकाभ्यां जीवस्य प्राणपद वाच्यत्वं पित्रादि पद बोध्यत्वं च भवति। न तु तादृश शरीरादेः पित्रादि पद बोध्यत्वमिति। अथ यथा अचेतनशरीरस्य ताडनकरणेनापि हिंसादि दोषो न। न वा केवलस्य जीवस्यापि हिंसनं भवति। "नायं हन्ति न हन्यते" "अजो नित्यः" इत्यादि वचनात्। ततश्च कस्य मारणे प्रकृते धिगादि वचनं तथा धिगादि वचनेन कथं प्राणस्य जीवत्वम्। तथापि केवल शरीरस्य केवल जीवस्य वा हिंसनाभावेपि देहादि समवहितस्यैव तथात्वमिति वत् मुख्यस्य प्राणस्यापि हिंस्यत्वं भवति। स्थावरहिंसास्थलेऽपि स्थावरेषु प्राणस्य पंचधाऽवस्थाय शरीर धारणाभावेपि प्राण सत्भावोऽस्तीति हिंसादि वचनमुपपद्यते एव। तथापि "प्राणो ह पितेत्यादि" वाक्य प्रतिपादितानां जीव वाचकत्वस्य लोके प्रसिद्धामनेकेषां पित्रादिपदानां गौणार्थकत्व कल्पनापेक्षया एकस्य प्राण पदस्य जीव परत्वमास्थेयम्। अतएव भगवता बोधायनेनापि "भूमासंप्रसादादध्युपदेशादिति" सूत्रस्य व्याख्यानावसरे प्रत्यगात्मन ऊर्ध्वमुपदेशादित्येव कथितं नतु प्राणदूर्ध्वमिति कथितम्, वेदनोत्पादकव्यापारलक्षणवेदनाया वेदना रहिते अचेतने असम्भवाच्च। तस्मादत्र प्राणपदं जीव परकम्। स च प्राण आशया भूयोऽधिकः तदधीनत्वात्। सर्वेषामिति ॥ ३ ॥

उत्तरोऽपि मंत्रो जीवस्यैव प्राणबोध्यत्वं दर्शयति (स वा एष एवमित्यादि)। स वा पूर्व वाक्ये प्राण पद बोध्यो जीवः। एवं

**न्नेवं मन्वान एवं विजानन्नतिवादो भवति तं चेद्ब्रूयुरति-वाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥**

**इति छान्दोग्योपनिषदः सप्तमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥**

यथोक्त प्रकारेण स्वकीयं स्वरूपं मन्वानो मन विषयं कुर्वन् विजानन् उपासनां कुर्वन्। एवं यथोक्त प्रकारेणात्मानं पश्यन् साक्षात्कारीय विषयतामापादयन् अतिवादी भवति। पूर्व कथित स्वकीयोपास्य वस्तु विषयकातिवदन शीलो भवति। वाचस्पति सदृशस्यापि प्रतिवादिनो मूकता साधक स्व देवतायाः परमोत्कृष्टता वदन शीलत्वमेवाति वादित्वम्। एतच्चातिवादित्वमुपास्य देवताया अतिशायित्वे पर्यवसितं भवति। एवं च पश्यन्नित्यादिस्थले योऽयं शतृप्रत्ययः स च हेत्वर्थकः। अतः स्वोपास्य देवतायाः साक्षात्कारोऽतिवादित्वे कारणम्। स्वोपास्य देवता साक्षात्कार रहितस्यातिवादित्वादर्शनात्। तादृश साक्षात्कारवतोऽति-वादित्व दर्शनाच्चान्वयव्यतिरेकाभ्यां तादृश साक्षात्कारस्यातिवादित्वे कारणत्वं सिद्धं भवति।

एवम् "स वा एष एवं पश्यन् एवं मन्वान" इत्यादि वाक्ये पूर्व प्रकरणनिर्दिष्टप्राणस्य मन्तृत्व द्रष्टत्वादि कथनेनापि प्राण पद बोध्यो जीव इति निश्चीयते। तं चेद् ब्रूयुरित्यादि तं च स्वोपास्यवस्तुनः सर्वोत्कृष्टवादिनमुपासकं प्रति यदि कश्चिदन्य एवं ब्रूयुः किममतिवाद्यसि तदा सतानेवं ब्रूयात्। अहमतिवाद्यस्मीति तं कदाचिदपि नापह्नुवीत। प्राणपदबोध्यस्य जीवस्य नामादित आरभ्याशान्त सर्वापेक्षया अतिवादित्व-मात्मनो नापह्नोतव्यमिति भावः ॥ ४ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

## अथ सप्तमाध्यायः षोडशः खण्डः ।

एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य षोडशः खण्डः ॥ १६ ॥

इह खलु नामादि पर्यायेष्वकथितस्यातिवादित्वात्र कथनात् आत्मन उपदेशः प्रक्रान्तः स च प्राणपद बोधिते प्रत्यगात्मनि जीवे पर्यवसितो भवतीति प्राणाद्वाव भूयोऽसीति नारदो न प्रश्नं कृतवान् । किन्तु नारदेनापृष्टमपि सनत्कुमारः स्वयमेव प्राणादपि अतिशायितं परमात्मानं सर्वाधारं सर्वोपादानं वक्तुमाह ( एष तु वा इत्यादि ) । एष तु इत्यत्र तु शब्दः पूर्वापेक्षया विशेष प्रदर्शकः एष एवातिवदति यः सत्येन ब्रह्मणानिमित्तेनातिवदति । अत्र सत्यपदं ब्रह्मणो बोधकम् । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम् । "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादिश्रुतिभ्यः सर्वदैवैकरूपेण व्यवस्थितत्वात् निर्विकारत्वाच्च । ब्रह्मैव परमार्थं सत्यं नान्यत्तद्भिन्नं परमार्थं सत् । अतो ब्रह्मणासत्येन निमित्तेन योऽतिवदति स अतिवादी भवति । प्रकृते च यः सत्येन वदति तस्य प्राणातिवाद्यपेक्षया अतिशय कथनात् । सत्यपदोपात्त ब्रह्मणः प्राणपद प्रतिपादित जीवापेक्षया भूयस्त्वमर्थतः कथितमेव भवतीति । ( सोहं भगव इत्यादि ) हे भगवन् ! यस्मात् सत्येन ब्रह्मणा निमित्तेन वदनशील एवातिभवति । तस्मात्कारणात् अहमपि सत्येनैवातिवदानि । वदिष्यामीत्यर्थः । ततः सनत्कुमारः प्राह । हे नारद ! यदि सत्य पद बोध्य परब्रह्म निमित्तकमतिवादित्वं स्वस्मिन् इच्छसि तदा सत्यं ब्रह्मैव विजिज्ञासितव्यः ब्रह्मण एवोपासना कर्तव्येत्यर्थः । तदनन्तरं नारदो ब्रह्मोपासनामंगीकुर्वन् आह

# अथ सप्तमाध्यायः सप्तदशः खण्डः ।

**यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासित-**

हे भगवन् ! अहं सत्यं परब्रह्मैव विजिज्ञासे ब्रह्मण एव उपासनां करोमि करिष्यामीत्यर्थः ॥ १ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
षोडशः खण्डः ॥ १६ ॥

यदिदं सत्यात्मकब्रह्मोपासनं तत् न साक्षादेवातिवदने हेतुः । किन्तु ब्रह्मसाक्षात्कारद्वाराऽतिवदने कारणमितीममर्थं दर्शयितुं सप्तदश खंड-मारभन् आह ( यदा वै विजानातीत्यादि ) । यदा वै विजानाति अत्र विजानाति पदं ब्रह्म साक्षात्कार परकम् । यदा खलूपासकः सत्यं सत्यपद बोध्यं ब्रह्म परमार्थतो विजानाति साक्षात्करोति । अथ तदा सत्यं परमार्थं सत्यं वदति । सत्येन निमित्तेनातिवदतीत्यर्थः । पूर्वं सत्ये-नातिवदानीत्यत्र सत्यपदबोध्यस्य ब्रह्मणः अतिवदनं प्रति निमित्तत्वेन करणत्व विवक्षया यथा तृतीया विभक्तिवत् । वदनं प्रतिकर्मत्वेन द्वितीया विभक्तिरपि उपपद्यते एवेति । स वा एष एवं पश्यन् एवं मन्वान इत्यादौ ब्रह्मसाक्षात्कार मननोपासनानामतिवादित्वं प्रतिकारणत्वस्य प्रतिपादनात् । सत्यं त्वेव विजिज्ञासितव्यमित्यादिना ब्रह्मोपासनस्य प्रतिपादितत्वात् । मतिस्त्वेव विजिज्ञासितव्येत्यादिना मननस्यापि वक्ष्यमाणत्वेन विजानाति नासाक्षात्कारस्यैव ग्रहणं भवतीति । अतो विजानाति शब्दः साक्षात्कार परकः नतु शास्त्रजन्य ज्ञान परक इति । नाविजानन् सत्यं वदतीति अविजानन् असाक्षात्कारकृत् न सत्यं वदति । साक्षात्काराभावेनाति-वादित्वम् । अतोऽन्वयव्यतिरेकाभ्यां साक्षात्कारस्यातिवादित्वे कारणत्वं भवतीति । अतः साक्षात्कारात्मकं विज्ञानमेव विजिज्ञासितव्यं सम्पाद-

व्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
सप्तदशः खण्डः ॥ १७ ॥

## अथ सप्तमाध्यायः अष्टादशः खण्डः ।

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
अष्टादशः खण्डः ॥ १८ ॥

नीयम् । यथा पाकं पचतीति प्रयोगस्तथैव विज्ञानं विजिज्ञासितव्यमित्यपि ज्ञेयम् । नारदः प्राह विज्ञानं भगवो विजिज्ञास इति । हे भगवन् ! अतिवादित्वे यत् कारणं ब्रह्म साक्षात्कारमेव सम्पादयामीति ॥ १ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
सप्तदशः खण्डः ॥ १७ ॥

( यदा वै मनुते इत्यादि ) । यदा वै मनुते मननं करोति अथ मननानन्तरं विजानाति साक्षात्करोति । तत्र मननं तर्कः नामत्या विजानाति मननमन्तरेण न विजानाति मत्यैव मननेनैव विजानाति । मननरहितस्य साक्षात्कारो न भवति । मननकरणेन च विजानातीत्यन्वयव्यतिरेकाभ्यां साक्षात्कारं प्रति मननस्य जनकत्वं सिद्ध्यति श्रुतिरप्याह श्रोतव्यो मन्तव्य इति । मतिस्त्वेव विजिज्ञासितव्या ब्रह्मोपासनोपायभूतं मननमवश्यमेव सम्पादनीयमितिभावः । शिष्यः प्राह । मति भगव इत्यादि ॥ १ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य अष्टादशः खण्डः ॥१८

# अथ सप्तमाध्यायः एकोनविंशः खण्डः।

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धात्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
एकोनविंशः खण्डः ॥ १९ ॥

# अथ सप्तमाध्यायः विंशः खण्डः।

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठात्वेव विजिज्ञासितव्येति

( यदा वै श्रद्दधातीत्यादि )। यदा वै श्रद्दधाति श्रोतव्ये मन्तव्ये च विषये ब्रह्मणि श्रद्धां करोति। श्रद्धा नाम मन्तव्ये वस्तुनि आस्तिक्य बुद्धिरादर विशेषो वा। यदा श्रद्धां करोति अथ तदा मनुते मननं करोति श्रद्धाविरहितस्य मननं न भवति। अथ च श्रद्धाऽऽस्तिक्य बुद्धि समन्वितस्य मननं भवति, तस्मादन्वयव्यतिरेकाभ्यां मनने आस्तिक्यबुद्धेः कारणता तस्मात् श्रद्धैव विजिज्ञासितव्येति। इतरः प्राह-श्रद्धां भगवो विजिज्ञासे इति ॥ १ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
एकोनविंशतितमः खण्डः ॥ १९ ॥

यदा वै निस्तिष्ठति निष्ठां करोति। ब्रह्म ज्ञानार्थं गुरु शुश्रूषादि तत्परत्वं निष्ठा। एतादृशीं निष्ठां यदा करोति तदैव श्रद्दधाति। निष्ठारहितो न श्रद्दधाति, निष्ठासहित एव श्रद्धां करोति। तस्मात् कारणान्निष्ठैवोपास्या ब्रह्मव्यतिरिक्तं न श्रोतव्यमपि तु ब्रह्मैव श्रोतव्यमित्येवं व्यवसाय लक्षणा

निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
विंशः खण्डः ॥ २० ॥

—❀—

## अथ सप्तमाध्यायः एकविंशः खण्डः ।

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
एकविंशः खण्डः ॥ २१ ॥

निष्ठैव श्रोतृणां त्वरात्मक श्रद्धा कारणतया सम्पादनीयेत्यर्थः । अन्यत् सर्वं पूर्ववदेव व्याख्येयमिति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
विंशः खण्डः ॥ २० ॥

—❀—

यदा करोति प्रयत्नवान् ( कृतिमान् ) भवति । तत्र कृतिः ज्ञानादीन्द्रियाणां संयमः मनस एकाग्रता करणम् । एतादृशप्रयत्नस्य सद्भाव एव निष्ठादिकं भवति । एतादृश प्रयत्नाभावे निष्ठादिकं न भवति । तस्मात् कृतिरेव विजिज्ञासितव्येति । अन्यत् सर्वं पूर्ववदेव ज्ञातव्यमिति ॥ १ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
एकविंशः खण्डः ॥ २१ ॥

# अथ सप्तमाध्यायः द्वाविंशः खण्डः ।

योवै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
द्वाविंशः खण्डः ॥ २२ ॥

—❀—

( यदा वै सुखमित्यादि )। यदा खलु सुखं लभते जानाति यद्यपि लभ धातोरर्थः प्राप्तिः तथापीह न प्राप्त्यर्थो विवक्षितः। किन्तु ज्ञानार्थक एव ज्ञानस्यापि प्राप्ति रूपत्वात् न च सुखं ब्रह्मात्मकमिदानीं न वर्तते। किन्तु कालान्तरे तत् प्राप्तं स्यात्। तत् कथमत्र वर्तमानापदेशः कृत इति वाच्यम्। भविष्यतोऽपि फलस्य वर्तमानत्वमिव कल्पनात्। भविष्यत् फलोद्देशेनापि प्रवृत्तौ दर्शनात्। यदा सुखं जानाति तदा प्रयत्नं करोति। नहि सुखमज्ञात्वा कश्चित्तदर्थं प्रयत्नं करोति। किन्तु सुखं ज्ञात्वैव तदर्थं प्रयतते। अयं भावः—ये यं प्रयत्नापरपर्याया कृतिस्तस्याः ब्रह्मणि निरतिशयानुकूलत्व ज्ञानमन्तरेणासंभवात्। श्रोतव्य पदार्थान्तरेषु हेयत्वानुसन्धानजनित मनसो नियमनलक्षण कृति जनकत्वे नात्यन्ता-नुकूलता लक्षणसुखत्वं परमात्मनि ज्ञातव्यमिति। सुखत्वेव विजिज्ञासितव्यं सुखमेव ज्ञातव्यमित्येवं नारदं प्रत्याह गुरुः। इतरः प्राह हे भगवन्! सुखमेव विजिज्ञास इति ॥ १ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
द्वाविंशः खण्डः ॥ २२ ॥

# अथ सप्तमाध्यायः त्रयोविंशः खण्डः ।

**यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥१॥**

**इति छान्दोग्योपनिषदः सप्तमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥**

( यो वै भूमेत्यादि ) यो वै भूमा महान् निरतिशयो बहु तत् सुखं सुख रूपम् भूमेत्यत्र भूम शब्दो बहुत्वार्थकः। बहुत्वञ्च वैपुल्यम् "अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः" इत्यादि स्थले अल्प विरोधिनि वैपुल्ये प्रयोग दर्शनात्। विपुलत्वं च गुणानामत्युत्कर्षात्मकम्। न तु परिमाणादि लक्षणम्। सुखे परिमाणस्यासम्भवात्। तस्मात् उत्कर्षकृतं वैपुल्यमेव भूम शब्देन बोधितं भवति। ततश्च यो भूमा तदेव सुखम् अत्यन्तानुकूलत्व लक्षणम्। एतादृशं सुखपरमात्मन्येव तिष्ठति न तु जीवे। तत्र वैपुल्याभावात् तदेव दर्शयति। नाल्पे सुखमस्ति। जीवे अत्यानुकूलत्व लक्षण-सुखत्वं नास्तीत्यर्थः। नाल्पे सुखमित्यत्र नञः प्रशस्त सुखत्व निषेध एवार्थः। यथा 'अब्राह्मणो वार्धुषिक' इत्यत्र न ब्राह्मणत्वस्य निषेधः। किन्तु प्राशस्त्यस्य निषेध एवमल्पेप्रत्यगात्मनि सुखात्मके प्रशस्त सुखत्वस्यैव निराकरणं भवति। तादृशसुखत्वं परमात्मनि सुखे एव। ततश्च भूमभिन्ने प्रशस्त-सुखत्वाभावात्। प्रशस्त सुखत्वादेव कारणात् परमात्मनि भूमत्वमप्यस्तीति सिद्धं भवति। न चेदं सुखं विषयसम्पर्क जनित सुखात्मकम्। किन्तु विषयसुखाद् विलक्षणमतिशयितं ज्ञानानन्द परमात्मरूपमेव। यतः सर्वातिशयित पुरुषार्थकारणीभूत स्वोपास्यमत्तुवाद लक्षणाति वादित्वकारण साक्षात्कारमननश्रद्धानिष्ठा प्रयत्नजनकं सुखज्ञानं निरतिशयसुखज्ञानमेव। तादृश सुखत्वं सर्वप्रकारोत्कृष्टस्यैव स्यात्। नत्वल्पस्य प्राणश्चाल्पो न तु भूमा प्राणस्यानेकप्रकारकदुःखास्पदस्य

# अथ सप्तमाध्यायः चतुर्विंशः खण्डः ।

**यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति**

हिंसादि योग्यस्य सर्वोत्कृष्टत्वाभावादिति ॥ १ ॥ अन्यत् सर्वं पूर्ववदिति ।

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
त्रयोविंशः खण्डः ॥ २३ ॥

पूर्वप्रकरणप्रतिपादित भूमाल्पशब्दयोरर्थविशेष जिज्ञासुं प्रति तदनुग्रहाय श्रुतिराह ( यत्रनान्यदित्यादि )। यत्र यस्मिन् अनुभूयमाने वस्तुविशेषे अन्यत् अनुभूयमान वस्तुविशेषात् भिन्नं वस्तु न पश्यति । नान्यत् शृणोति न विजानाति स भूमा । अर्थात् यस्मिन् परमात्मनि दृष्टे सति परमात्मव्यतिरिक्तं न दृष्टं न श्रुतं भवति । न विज्ञातं भवति स एव भूमा । यत्रेत्यत्र सप्तमी विभक्तेर्विषयत्वमर्थ स्ततश्च यं पश्यन् यतोऽन्यत् व्यतिरिक्तं ( भिन्नं ) न पश्यति न शृणोति न विजानातीति स भूति परमार्थः । अत्र परमात्मव्यतिरिक्तस्य दर्शनाद्यभाव प्रतिपादनम् । व्यतिरिक्तवस्त्वभावाभिप्रायेण । ततश्च यतोऽन्यन्नास्ति स भूमेति निर्गलितोऽर्थः । अत्र प्राणोपलक्षितो जीवोऽपि धर्मभूत विज्ञान विभव दशायां भूमा पद वाच्यो भवतीति न स्वीकर्तव्यमिति कथनाय यादृश स्वरूपस्य भूम शब्द विवक्षितत्वे सर्वातिशायि सुख रूपत्वं भूम्नः सिद्धं भवेत्, तादृशमर्थं दर्शयितुमेवाह—यत्रनान्यत्पश्यतीत्यादि । संसारमध्यनिविष्टं सर्वमपि जड़चेतनात्मकं वस्तु यस्यैकस्य गुणरूपेण विभूतिरूपेण वा प्रकारभूतं स एव भूम शब्दस्य वाच्योऽर्थो न तु प्राणादिरिति । एवं च "स्थितेरविन्दे मकरन्द निर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते" इति न्यायात् । परमात्मदर्शन श्रवणादौ प्रवृत्त उपासको यदा परमात्म व्यतिरिक्तं न पश्यति न शृणोति । इत्यर्थ स्वीकारेण तदानीमननुभूयमान एव प्रपञ्चः प्रतीयेत । ततश्च प्रपञ्चस्यापि सुख रूपत्वमनुभूयमानत्वं च स्थितमिह प्रदर्शयितुमन्योऽपि विभूति गुण

**स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पंतन्मर्त्यं स भगवः कस्मिन्प्र-**

विशिष्टं निरतिशय सुखस्वरूपं ब्रह्मानुभवन् ब्रह्म व्यतिरिक्तस्या भावादेव किमप्यन्यन्न पश्यतीत्यादिकमर्थं विज्ञापितवानिति। ननु ब्रह्मव्यतिरिक्तस्य जड़चेतन वर्गस्य विद्यमानत्वात् कथमुच्यते भूम्नोऽतिरिक्तं नास्तीति। न च जड़चेतन विशिष्ट परमात्मन एव भूम शब्दार्थत्वेन विशेषणीभूतयो र्जड़चेतनयोरपि भूम्न्येवान्तर्भावात्। भूमभिन्नस्य निषेधो युज्यत एवेति वाच्यम्। विशिष्टाद्विशेषणस्य भिन्नत्वात्। अयमर्थः। इमौ जड़चेतनौ यौ विशेषणरूपौ ताभ्यां विशिष्टस्य भिन्नत्वेन विशिष्टादन्यं नास्तीति निषेधस्य युक्तत्वमेव। अपि च "अथात आत्मादेश" इत्यादिना भूम्न एवात्मत्वोपदेशस्य वक्ष्यमाणत्वात्। एवञ्च भूमव्यतिरिक्तस्य वस्तुनो विद्यमानत्वात्। नान्यत् पश्यतीति कथनं कथमिव संगच्छते इति चेत् सत्यम्। यथा ब्रह्मपदस्य वस्तु परिच्छेद रहितत्वमर्थस्तथा भूम शब्दस्यापि वस्तुपरिच्छेद राहित्यमेवेत्यर्थं करणे नादोषात्। तत्र वस्तु परिच्छेदो नाम इदमेतत् न भवतीति निर्देशयोग्यत्वम्। तत्त्वं च तदपृथक् सिद्धत्वं तदधीन सत्ताकत्वमित्यर्थः। ततश्च जीवजडयोःपरमात्मसत्ताधीन सत्ताकत्वेन भूम व्यतिरिक्त वस्तुनोऽभावः सिद्ध्यतीति। अथ यत्रान्यत्पश्यति। अन्यत् शृणोति। अन्यद्विजानाति। तदल्पम्। पूर्व कथित भूमलक्षण रहितं यत् तदल्पम्। यो वै भूमा पूर्वोक्त लक्षण लक्षित भूमैव। अमृतम् जन्ममरणादि धर्मविरहितम्। नित्याविर्भूतानन्याधीनत्वादि गुणकमित्यर्थः। यदल्पं तन्मर्त्यम्। जन्ममरणादि युक्तम्। यत् भूमभिन्नं तत्सर्वं मर्त्यमेवाल्पत्वात् भूमापेक्षया। नित्य मुक्तादीनामपि अनन्याधीनतादृशत्वाभावात् न काप्यनुपपत्तिः। न च प्राण पद वाच्य जीवस्याल्पस्यापि अमृतत्वात् कथनस्य मर्त्यत्वमिति वाच्यम्। मर्त्यत्वस्य मृत्यर्हत्वात्तन्मृत्यर्हत्वं वस्तुतो विमृत्योरपि जीवस्य घटते एव जीवस्य परमात्माधीनतया मृतिस्वरूप योग्यता अनपायात् इति।

**तिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥**

**गौ अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं**

यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पित मित्यादिना पूर्वं प्राणस्य सर्वाधारत्ववर्णनं कृत्वा तादृश प्राणोपासका- पेक्षया भूमोपासकस्यातिवादित्वं कथितम्। परन्तु यद्यद्वस्तु तत्सर्वमा- धारसापेक्षं भूमापि वस्तु इति तस्यापि आधार सापेक्षत्वमवश्यमेव भाव्यमन्यथा वस्तुत्वमेव ततो निवर्तेतेति मन्वानो नारदः पृच्छति सनत्कुमारमित्याशयेनाह। ( स भगव )। इत्यादि स भगवः कस्मिन् प्रतिष्ठित इति। हे भगवन्! यथा सर्वाधार भूतोऽपि पृथिव्यादि पर- मात्माधार सापेक्ष एवमयं भूमा कस्मिन् आधारे आश्रितोऽथवा अनाधार इति। सनत्कुमारः प्राह। हे नारद! स्वे महिम्नि। स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ वा स भूमा प्रतिष्ठितः। स्वीय महिमाधारक इत्यर्थः। स्वयं दासास्तपस्विन इतिवत्। अनाधारः सामान्यत आधाररहितो भूमेति। स्व ज्ञाता वात्मीयेति वचनात्। स्व शब्दस्यात्मीय वचनत्वात् आत्मीये नियाम्यतया महिमलक्षणे गवाश्वादौ प्रतिष्ठित स भूमा इत्येवं वाक्यस्याशयं कदाचित् ज्ञास्यति नारदो यद्वा। स्व शब्दस्यात्म वाचकत्वेनात्माधार एव भूमा इति वा वाक्यस्यार्थं ज्ञास्यति वा। परन्तु नै- तदुभयमपि संभवति। यतः परमात्मन उभय प्रकारकात्मीय लक्षण महिम सत्वेपि सर्वथाऽनाधारस्य भूम्नस्तस्मिन् विभूत्यादि लक्षे प्रतिष्ठाना संभवात्। नहि स्वं स्वस्याधिकरणं सम्भवति इत्याकारक शिष्यस्य बुद्धि निवारणीयेति मन्वानो गुरुः पुनराह ( यदि वा न महिम्नीति )। स भूमा न स्वे महिम्नि प्रतिष्ठित इति ॥ १ ॥

विभूतिमेव विवृणोति। ( गो अश्वमिहेत्यादि ) गो अश्व- मित्यादौ द्वन्द्वैकवद्भावः। नाहमेवं ब्रवीमीति होवाच। हे नारद! तत्र विभूत्यादि लक्षणे भूम्नः प्रतिष्ठितत्वं नाहं ब्रवीमि न कथयामि। न च

**च्चेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥**

**इति छान्दोग्योपनिषदः सप्तमाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥**

## अथ सप्तमाध्यायः पञ्चविंशः खण्डः ।

**स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वमित्यथातोऽहङ्कारादेश**

स्वरूप महिम प्रतिष्ठितत्वमपि भूम्नः इत्यत आह—अन्योह्यन्यस्मिन् प्रतिष्ठित इति स्वस्य स्वप्रतिष्ठितत्वं न सम्भवति। आधाराधेययो र्भेदात् अभेदे तदयोगादिति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥

ननु नाना दिक्कालवर्तिनां चेतनाचेतन वस्तूनां परस्परं भिन्नानां परमात्मभिन्नानां च वर्तमानत्वात् । कथं यत्र नान्यत् पश्यतीति कथ्यते । यत्र नान्यत् पश्यतीति कथनं तदा संगच्छेत । यदि परमात्मभिन्नः पदार्थो न भवेत् नत्वेवं सन्ति। सन्ति बहवः पदार्थाः जडचेतनाचेतनाविभागेन वर्तमाना इत्याशङ्कां पराकर्तुं सर्वत्र परमात्म सत्वमवबोधयतुमाह ( स एवाधस्तादित्यादि )। स एव भूमैवाधस्तात् । योयमधोदेशऽधोदेशस्थः पदार्थश्च स भूमैव नतु तद्व्यतिरिक्तः स एवोपरिष्टात् । स भूमैवोपरिष्टादुपरिदेशे । ऊर्ध्वात्मकोदेशादेशवर्ति पदार्थश्च स सर्वोऽपि भूमैव । स एव भूमैव पश्चात् । पश्चिमदेशो देशवर्ति च भूमैव । एवं स दक्षिणतः स उत्तरतः । किं बहुना स एवेदं सर्वम् । स भूमैवेदं परिदृश्यमान चेतनाचेतनम् । तत्सर्वं भूमैव भूम्नोऽवयवात्मकमेव ।

**एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वमिति ॥ १ ॥**

**अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा**

अत्र स एवेदं सर्वमिति सामानाधिकरण्यात्। स इति पदबोध्यस्य भूम पदार्थस्य। इदं सर्वमिति पदनिर्दिष्टस्य जडचेतन समुदायस्य च शरीरशरीरिभावः फलितो भवति। ततश्च भूमव्यतिरिक्तस्याभावात् यत्र नान्यत् पश्यतीत्यादिना भूमभिन्नान्यस्य निषेधे न काप्यनुपपत्तिः। यतो भूमव्यतिरिक्ततयाभासमानस्य यदाभूमावयवत्वं तदाभूमव्यतिरिक्तस्य निषेधो युक्तियुक्त एवेतिभावः ॥ १ ॥

यथोक्त प्रकारेण सर्वात्मभूतस्य परमात्मनो भूम्न उपासनायां स्व शरीरकतयोपासनं विधेयमित्युपदिशति ( अथातोऽहंकारादेश ) इति अथानन्तरं भूम्नः सर्वशरीरकत्व प्रतिपादनानन्तरं अहंकारादेशः क्रियते। तत्राहंकारोऽहं बुद्धिरहं ग्रहेण भूमाख्यस्य परमात्मन उपासन प्रकारोऽतः परमुपदिष्टो भवतीत्यर्थः। नात्र प्रकरणे जीवस्वरूपोपदेशः। एवं सति अहं पदेनैव तदुपदेश सम्भवेन अथातोऽहंकारादेश इत्यस्यैव युक्ततयाकार-पदप्रयोगस्य नैरर्थक्यापातात्। अथ अहं सुखीत्यादि प्रतीत्याऽहं पद गम्यत्वं जीवस्यैव नतु परमात्मन स्तथाचाथातोऽहंकारादेश इत्यादि प्रकरणेन कथं परमात्मन उपासनमिति मन्वानं शिष्यं प्रति अहं ग्रहेण परमात्मन उपासन प्रकारं दर्शयितुमाह ( अहमेवेदं सर्वमितीति ) यश्च सर्वदेशवृत्तिः परमात्मा सर्वात्मा सर्वाधारो भूमाऽहयमेवेति। जीवस्य सर्वाधारत्व सर्वात्मकत्वाभावेन नेदं जीवोपासनमपि तु भूम्नः परमात्मन एवोपासनमितिभावः। अथ अहमित्याकारक बुद्धेः शब्दस्य च जीवात्म-विषयकतया प्रसिद्धः कथं भूमविषयत्वम्! एवमहमर्थभिन्ने परमात्मनि अहं ग्रहोपासनमयथार्थमेव स्यात्। तदभावयति तत् प्रकारकत्वेन शुक्तौ

**पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं-सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्**

रजत बुद्धिवदित्याशंकायाम् परमात्मनो जीवात्मानं प्रत्यात्मत्वेनजीव विषय बुद्धि शब्दयोः परमात्मबोधकत्वमप्युपपद्यते इति ज्ञापयन् तरति शोकमात्मवित् इत्यादिना प्रक्रान्तमात्मत्वोपदेशं परमात्मन्युपसंहरन्नाह ( अथात आत्मादेश एवेत्यादि ) अत्र क्रियते इति क्रिया पदमध्याहार्यम् । अथ शब्दश्च प्रकृत विषयत्व प्रदर्शनार्थकः आत्मादेश आत्मत्वोपदेशः क्रियते आत्मैवाधस्तात् अधोदेशे आत्मैव विद्यते इत्यर्थः । एवं सर्वत्र आत्मैवेदं सर्वमिति सर्वात्मतया समुपदिश्यमानः परमात्मा भूमा स तु उपासकस्यात्मैव भवति । एवं चोपासकस्यात्मभूते परमात्मनि अहं पदागम्येपि अहं प्रत्ययशब्दयोः प्रयोगो यथार्थ एव अतद्वति तत्प्रकारक बुद्धेरेवायथार्थत्वात् न तु केनापि रूपेण तद्वति तत्प्रकारक ज्ञानस्यायथार्थत्वमिति । ननु (अथात आत्मादेश इत्यादिना) य आत्मत्वोपदेशः स भूम विषयक इत्यत्र किं प्रमाणमिति चेत् परस्परं-भिन्नयोः पदार्थयोः सार्वात्म्यस्यासम्भवात् । एकविषयत्व स्वीकारे एव पर्यवसानात् । न च स एवाधस्तादित्यादि वाक्येन यदा सर्वात्मकत्वं सिद्धं तदा सर्वान्तः याति उपासक जीवात्मत्वमपि सिद्धमेवेति । कथं सिद्धस्यैव साधनम् अथात आत्मादेश इत्यादिना कृतम् । नहि सिद्धस्य साधने प्रयोजनं किमपि । एवं च सिद्धस्य साधनं कुर्वतो वाक्यस्य ज्ञातार्थज्ञापकतया अप्रामाणिकत्वमेवापततीति वाच्यम् । स एवेदं सर्वमिति सामानाधिकरण्येनार्थतो भूम्न आत्मत्वं फलितं भवति । अथात आत्मादेश इत्यादिना तु कण्ठत उपासकात्मत्व प्रतिसिद्ध्यर्थं तथा प्रतिपादनात् । न च तथापि सामान्योक्ति विशेषे पर्यवस्यति तत्र किं नियामकमिति वाच्यम्,

**भवति तस्य सर्वेषु लोकेषु कामचारो भवति। अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति। तेषां**

एवं विजानत आत्मतः प्राण इत्यादौ, उपासकात्मनः प्राणादीनामुपादानत्वेन सार्वात्म्यस्याग्रिम प्रकरणे प्रतिपानस्यैव नियामकत्वादिति भावः। ( स वा एष एवमित्यादि ) स वा एष भूमोपासकः एवं यथोक्त प्रकारेण भूमानं पश्यन् मन्वानो विजानन् आत्मरतिर्भवति। आत्मनि रतिर्यस्य स तथा तत्र रतिः स्रक् चन्दनादि जन्या प्रीतिः। आत्मनि क्रीडः आत्मन्येव क्रीडा उद्यानादि जन्या प्रीतिर्यस्य स आत्मक्रीडः। आत्ममिथुनः रूपादि सम्भवाप्रीति मिथुनम् आत्मानन्दः। विभूतिजन्या प्रीतिरानन्दः। श्रवण मनन निदिध्यासन द्वारेणात्म साक्षात्कारं कुर्वत उपासकस्य सर्वप्रकारक सुखानुभव आत्म सुखानुभवे एवान्तर्भवतीति भावः । स स्वराड् भवति। किम्बहुना स स्वयमेव राजापि भवति। कर्मवश राहित्यात् । विधि निषेध शास्त्र पराधीन स्तत् तत्कर्मजनिता पूर्व तारतम्येन फलविशेषं सातिशय मे प्राप्नोति। अयन्तु कर्म निरपेक्षो निरतिशय सुखभाग्भवतीति। ( तस्य सर्वेषु लोकेष्वित्यादि ) तस्य भूमोपासकस्य सर्वेषु लोकेषु कामचारः स्वेच्छाचरणं भवति। यावत् खलु जीव कर्म पराधीनः प्रतिहत ज्ञानो भवति तावदेव हि तस्येच्छा विघातो भवति । अयन्तूपासको भगवदाराधनेन कर्माप्रतिहतो लब्धज्ञानो विकार लोकान्ब्रह्म विभूतिलक्षणान् लोकाननुभूय यथाकामं तृप्तो भवतीतिभावः। ( अथयेऽन्यथेत्यादि ) अथ ये उपासकाः कथितोपासनाप्रकारात् अन्यथा प्रकारान्तरेणोपासते उपासनं कुर्वन्ति तेऽन्य राजानोऽन्येराजानो भवन्ति। येषां तथाभूता भवन्ति। कर्म पराधीना भवन्तीत्यर्थः। अन्यराजत्वं स्वराडित्यस्य विरोधी भवतीति। तथा क्षय्यलोका भवन्ति। ये च परमात्मनो ध्यान कैङ्कर्यादिषु संलग्नास्तेषां भगवदाराधन

सर्वेषु लेकेष्वकामचारो भवति ॥ २ ॥

इति छान्दोग्योपनिषदः सप्तमाध्यायस्य
पञ्चविंशः खण्डः ॥ २५ ॥

—:※:—

## अथ सप्तमोऽध्यायः षड् विंशः खण्डः ।

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मतआप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो

बलोनाक्षय्य साकेत निवासोऽवश्यंभावीति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
पञ्चविंशः खण्डः ॥ २५ ॥

अथात आत्मदेश इत्यादिना उपासकान्तर्यामिणो जड चेतन निखिल प्रपंचोपादानत्व लक्षण सर्वात्मकत्वं यत् कथितं तदेव स्पष्टयितुमाह ( तस्य ह वा एतस्यैवमित्यादि ) श्रवणादि क्रमेण साक्षात्कारं कुर्वन् उपासकस्य परमात्मैवोपक्रमोपनिर्दिष्ट प्राण शब्द शब्दित जीव पर्यन्त निखिल प्रपंचस्योपादान कारणं भवतीति, निगमयति अतोऽहमेवेदं सर्वमित्यादिना प्रतिपादितोऽहं ग्रहः परमार्थविषयक एव । यद्यपि उपक्रम प्रकरणेनामादि प्राण पर्यन्तं पूर्वं पूर्वमुत्तरोत्तरस्योपादानमिति प्रदर्शितम् । न तु साक्षादेव सर्वं नामादिकं परमात्मजन्यम् तथापि 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे" त्यादि सद्विद्योक्तरीत्या पूर्वं पूर्वकारणवर्ती

**वागात्मतो नामात्मतो मंत्रा आत्मतः कर्माण्यात्मत एवेदं सर्वमिति ॥ १ ॥**

**तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव**

परमात्मा उत्तरोत्तरप्राणान्त सकल प्रपञ्चस्य साक्षादेव कारणमिति। आत्मात आशेत्यादिना समर्थितमिति ॥ १ ॥

एवं स वा एष एवं पश्यन्—आत्मरतिरिति नारदप्रार्थितमात्म-दर्शनमुपदिश्यात्मसाक्षात्कारादेवात्मज्ञानी संसारं तरतीति प्रत्याय यति तदेषः श्लोक इति। तत्तस्मिन्विषये एषो वक्ष्यमाण श्लोको भवति पश्यः=पश्यति परमात्मानं साक्षात्करोति जड चेतन निखिल प्रपंच-कारणतया यः स पश्यो ब्रह्मदर्शी। स मृत्युं जन्मपरम्परालक्षणं संसारं तथा रोगं ज्वरादिकं दुःखसाधनम्। दुःखताम् संसारे प्रतिकूल वेदनीयतां न पश्यति नानुभवति। पश्यो ब्रह्मदर्शी सर्वं पश्यति परमात्म साक्षात्कर्ता संकल्पमात्रेण जानाति। तथा सर्वशः सर्वमाप्नोति सर्वानेवार्थान् सर्वकाले प्राप्नोत्यनुभवति च, अपहतपाप्मत्वादि गुणानां तस्मिन्प्रादुर्भावो भवति। दुःखतां न पश्यतीति कथनेन मुक्तपुरुषं प्रति संसारस्य प्रतिकूलत्वं नास्ति इति गम्यते, यथापित्तादि दोषवशात् सित शर्करादावरुचिः पित्तदोषवशात्। नतु स्वरूपतस्तथेहापि कर्मजन्यमेव जगति प्रातिकूल्यं नतु स्वरूपतो जगत् प्रतिकूलम्। इह च मुक्तस्य कर्माभावात् न तस्यकृते जगत् प्रतिकूलं भवतीति भावः। (स एकधात्रिवेत्यादि) यद्यप्यात्मा निरवयव इति तस्य त्रिधा पंचवेत्यादि व्यवहारो न सम्भवति। तथापि संकल्प परिगृही-तानेक प्रकार शरीरवान् भवतीति भावः। एवं यथोक्त प्रकारेण मोक्षकारण-भूतं परमात्मनोपासनं समुपदिष्टवान्। इदं चोपासनं प्रतिबन्धक

**पुनश्चैकादशः स्मृतः शतश्च दशचैकश्च सहस्राणि च विंशतिराहार शुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृति लम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय**

पापस्य यदा अपगमः स्यादन्तःकरणात् तदैव स्यात् अन्तःकरण पापरहितत्वम् राजसतामस भोजनकर्तृणां न सम्भवति। किन्तु राजस तामसेतर सात्विकाहारसेविनामेव तत्सम्भवतीति। परमेश्वरोपासकः सात्विकाहार सेवी भवेत्तदुपदिशति आहार शुद्धावित्यादि। यद्वा विज्ञानादनन्तरं जायमानं दर्शनं मोक्षकारणं तत्सम्भवे एव मोक्षः स्यात्। एवं च "स वा एष एवं मन्वान एवं विजानन् एवं पश्यन्" इत्येवं क्रमेण क्रमो दर्शयितव्यः। तत्कथमिह पूर्वभिन्नक्रमोदाहरणं कृतवानित्या-शयेनाह, ( आहारशुद्धावित्यादि ) स्मरणसन्तान रूपा पराभक्तिरेव मोक्षकारणम्। "भक्त्यात्वनन्यया लभ्याऽइमेवं विधोऽर्जुन" इत्यादि वचनात् तादृश पराभक्तेरेवाहार विशुद्धि प्रभृति पुरुष प्रयत्न साध्यतया विधेयत्व संभवात्। पश्यन्नित्यनेन तादृशभक्तेरेव क्रमवत् दर्शन समानाकारकत्वमभिप्रेतम्। न मुख्यः साक्षात्कारोऽभिप्रेतः। यद्वाऽत्र प्रकरणे श्रवणस्य पृथक्कथनाभावात्। स्थान प्रमाणेन पश्यन्निति पदस्य शब्दतो जानन्नित्येवार्थः। अतएवोपदेशकः सनत्कुमारः तमसः पारं दर्शयतीत्यादि वाक्येन दर्शकत्वेनोच्यते इति। आहारशुद्धौ = सात्विका-हार सेवने सति सत्वशुद्धिः सत्वस्यान्तःकरणस्य शुद्धिर्नैर्मल्यं भवति प्रति-बन्धक पापराहित्यं भवति, इत्यर्थः तादृश नैर्मल्यं च शुद्ध सात्विकाहार सेवनादेव "दीपो भक्ष्यते ध्वान्तं कज्जलं च प्रसूयते। यदन्नं भक्ष्यते नित्यं तादृशी जायते प्रजा" इति लोकन्यायात्। सत्वशुद्धौ ध्रुवा स्मृतिरिति सत्वस्य नैर्मल्ये ध्रुवास्मृतिरविच्छिन्न स्मृतिसंतान लक्षणं परमात्मध्यानं सम्पद्यते। ततश्च स्मृतिलम्भे ध्रुवस्मृतिलाभे सति सर्व-ग्रन्थीनाम् विप्रमोक्षः। स्मृतिसन्तानलाभेसति दुर्मोचतया ग्रंथि शब्द

**तमसस्पारं दर्शयति भगवान् सनत्कुमारस्तं स्कन्द इत्या-चक्षते तं स्कन्द इत्याचक्षते ॥ २ ॥**

**इति छान्दोग्योपनिषदः सप्तमाध्यायस्य**
**षड्विंशः खण्डः ॥ २६ ॥**

**इति छान्दोग्योपनिषदः सप्तमोऽध्यायः ॥ ७ ॥**

वाच्यस्याविद्यारागादेर्मोक्षो विनाशो भवतीति । इह खलु स्मृतिलंभे सर्वग्रन्थीनां विप्रमोक्ष इति कथनेन स्मृत्युत्तरकालजन्येन स्मृतिविलक्षण दर्शनेन न मोक्षो भवति । किन्तु दर्शन समानाकारक स्मृतिसन्तानेनैव मोक्षो भवतीति सूचितम् । ततश्च "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्" इत्यत्र पश्यन्नित्यादि शब्दादर्शन समानाकारकोपासना-परकाः । एवं प्रकरणान्तरेऽपि श्रूयमाणा आत्मा वारे द्रष्टव्य इत्यादि शब्दा-अपि दर्शन समानाकारक ध्यानपरका एवेति । वक्तव्यं वस्तु निरवशेषतो व्युत्पाद्याथाख्यायिकामुपसंहरन्नाह ( तस्मै मृदित कशायायेत्यादि ) तस्मै भक्तप्रवराय नारदाय मृदितकषायायः मृदितो विनाशितः कषायः पाप लक्षणो यस्य तस्मै शुद्धान्तःकरणाय नारदाय तमसः संसारस्य पारं दर्शयति, सनत्कुमारो भगवान् संसारात्मकारस्य चण्डसूर्य तुल्यमुपासना विषयीभूतं परमात्मानमतिस्पष्टरूपेणोपदिष्टवानिति भावः । शिष्यस्य विशुद्धान्तःकरणतयोपदेश योग्यतामाकलय्यैवोपदेशं दत्तवानित्यर्थः । तं सनत्कुमारं स्कन्देति नामान्तरमपि पूर्वाचार्या आचक्षते कथयन्तीति । द्विर्वचनमध्याय परिसमाप्ति बोधकमिति ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये सप्तमाध्यायस्य
षड्विंशः खण्डः ॥ २६ ॥

इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायाः
छान्दोग्योपनिषदः सप्तमाध्यायः समाप्तः ॥ ७ ॥

श्रियः श्रियै नमः ।

अथ श्रीमद्भगवद्रामानन्दाचार्यकृतानन्द भाष्यभूषितायाः

# छान्दोग्योपनिषदः

## अष्टमाध्याये प्रथमः खण्डः ।

**अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म**

षष्ठाध्यायेऽणिमोपासन लक्षणायां सद्विद्यायां व्यापकत्वाविरोधि किञ्चिद्रूपं स्वनिष्ठमणुत्वं प्रतिपादितम् । सप्तमाध्याये भूम विद्यायां व्यापकत्वं प्रतिपादितम् । अथास्मिन्नष्टमे परमात्मनो दहर हृदयपरिच्छिन्नत्व प्रयुक्तं दहरत्वमुपवर्णयिष्यति । पूर्वोपासनमिवैतदप्युपासनं सत्य विषयकमेव तत्रापि पूर्वं स्वरूप सत्यत्वमात्रं प्रतिपादितमिह तु परमेश्वरगुणानां सत्यत्वं प्रतिपादयितुं सम्प्रति दहर विद्या प्रस्तूयते ( अथ यदिदमित्यादि ) अत्र खलु विद्यान्तरारम्भ प्रदर्शनार्थको अथ शब्दः । अथास्मिन्ब्रह्मपुरे ब्रह्मणः पुरं नगरम् तस्मिन् शरीरे नवद्वारादि मति । इदं च शरीरमुपास्य-तया संनिहितस्य रामाख्य परमात्मनः स्थानं पुरमिव पुरम् । यथा लोके सार्वभौमस्य स्थानं पुरं भवति । इहापि ब्रह्मैव सार्वभौमम् ! सर्वप्रकारक विभूतिमत ईश्वरादन्यः कः सार्वभौमः सर्वभूमिषु गुणत सर्वात्मना सम्बन्धी अयमेव सार्वभौमः । तत्र शरीरं इव स्वरूपतोपि सर्वात्मना सम्बन्धी अयमेव सार्वभौमः । तत्र शरीरं ब्रह्मणः पुरम् । इन्द्रियाणि सर्वाणि पौरान् ब्रह्म सार्वभौमम् । स्वकीय-मात्मानं च दासं भावयेदिति । तस्य ब्रह्मणः शरीराख्य पुरे दहरमत्यल्पं पुण्डरीकं कमलं तदिदं हृदयाख्यं वेश्म वेश्मवत् वेश्म । अस्मिन् वेश्मनि दहरोऽतिसूक्ष्मः आकाशः य आसमन्तात् काशते प्रकाशते इत्याकाशः ।

दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥

तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति ॥ २ ॥

स ब्रूयाद्यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते

स एवास्मिन् अन्तर्वर्तमानत्वात् दहर इति कथ्यते। एतज्ज्ञापनायैवाकाश शब्दस्य प्रयोगः, अत्र च यः इति यत्शब्दस्याध्याहारः कर्तव्यः तदन्वेष्टव्य मित्यत्र। तच्छब्देन गुणवतस्तस्यैव ग्रहणम्। तस्मिन् यदन्तर्वर्ति तदन्वेष्टव्यं तदेव विजिज्ञासितव्यम् इति ॥ १ ॥

एवं प्रकारेणाचार्यः शिष्याय ब्रूयादिति। ( तञ्चेदित्यादि ) तम् एवमुक्तवन्तमाचार्यं प्रति शिष्या एवं ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे परिच्छिन्नं अन्तर्दहरमतिसूक्ष्मं पुण्डरीके वेश्म अत्र दहरोस्मिन्नान्तराकाशः। किं तत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति अयं भावः ॥ २ ॥

स्वल्प हृदय मध्यवर्तितया अतिसूक्ष्मे आकाशे कीदृशं वस्तु तत्रस्थातुं शक्नोति। यस्यान्वेषणं स्यादिति दहराकाश पद बोध्यत्वं तन्मध्यतया कथितस्य ब्रह्मगुणजातत्वं चाजानन्तः शिष्या यदि ब्रूयुरिति। ( स ब्रूयादिति ) शिष्येणैवमुक्त आचार्यः स ब्रूयात् प्रतिवचनं दद्यात्। यावान् या अयमाकाशः तत्र यावान् यावत् परिमाणको भूताकाशो वायु प्रभृति भूतानामाधारभूतः तावान् तावत् परिमाणक एवायम्। अन्तर्हृदये। हृदयन्तर्वर्ति आकाशः नतु हृदयस्य परिच्छिन्नत्वात्तन्मध्यवर्ति आकाशः

**उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥ ३ ॥**

**तं चेद्ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि**

परमा[illegible] तया परिच्छिन्नः। किन्तु अतिशयेन सो विपुलः। भूताकाशसदृशत्वं ब्रह्माकाशे कथयित्वा। तत एव भूताकाशवत् पृथिव्यादि सर्वभूताधारत्वं ब्रह्माकाशस्य दर्शयितुमाह। उभे अस्मिन्नित्यादि। अस्मिन् दहराकाशे उभे द्यावापृथिवीः अन्तरेवमध्ये एव समाहिते निविष्टे तथा उभौ अग्निवायू तत्रैव निविष्टौ। सूर्यादयाऽपि तत्रैव निविष्टाः। द्यावा पृथिव्यादि शब्द लक्षितं भोग्यं भोगस्थानं भोगोपकरणं वह्निसूर्यादि शब्दबोध्यो भोक्तृवर्गश्च सर्वोऽपि दहराकाशे आश्रित इत्यर्थः। (यच्चास्येहास्तीत्यादि)। अस्योपासकस्य जीवस्य इहास्मिन् लोके यत् भोग्यजातमस्ति विद्यते यच्च मनोरथाद्युपनीतं भोग्यजातं नास्ति। सर्वं तत् विद्यमानमविद्यमानं भोग्यजातम् अस्मिन्दहराकाशे समाश्रितमित्यर्थः। दहराकाशो निरतिशय भोग्यो भवतीति ॥ ३ ॥

एवमुक्तवन्तमाचार्यं प्रति यदि शिष्या एवं वक्ष्यमाण प्रकारेण ब्रूयुः, किं ते शिष्या ब्रूयुराचार्यं तत्राह (अस्मिंश्चेदिदमित्यादि) अस्मिन् परिदृश्यमाने ब्रह्मपुरे ब्रह्मपुर शब्दिते शरीरे इदं सर्वम् समाहितं सर्वे कामादयश्च समाश्रिताः। अर्थात् ब्रह्मपुरबोध्यं शरीरम्, द्यावा पृथिव्यादि शब्दप्रतिपादितं भोग्यं भोगोपकरणं भोगस्थानम्, अग्नि वायु प्रभृति शब्देन प्रतिपादितो भोक्तृवर्गः। एतत् सर्वं यदि अस्मिन् अन्तराकाशे शरीरस्थे यद्याश्रितो भवेत् तदा यस्मिन् काले एतत् शरीरम् जरा वृद्धावस्था आप्नोति। जरया जीर्णं भवेत् प्रध्वंसते शरीरं विनष्टं वा भवति। तदा किमत्रावशिष्यते। अर्थात् यदा यदा शरीरं विनष्टं भवति तदा तदाश्रितं सर्वं पूर्वोक्तं विनष्टं स्यात्। यथा दध्याधार

**च भूतानि सर्वे च कामा यदैनज्जरामाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥**

**स ब्रूयान्नास्य जरयैतज्जीर्यति न बधेनास्य हन्यत**

पात्र विनाशे तत्र विद्यमानं दध्यादिकं विनष्टं भवति । तद्वत् शरीर विनाशे तदाश्रित भोग्यभोग्योपकरण भोगस्थान भोक्तृवर्गादीनां सर्वेषामेव विनाशः प्राप्नोतीति । स्यादेतत् यदि शरीराश्रितत्वं द्यावा पृथिव्यादीनां कथितं भवेत् तदा शरीरात्मकाधार विनाशे तदाश्रित द्यावा पृथिव्यादीनां सर्वेषां विनाशः शंकितो भवेत् । नत्वेवं किन्तु दहराकाशाश्रित्वं भोग्य भोगोपकरणादीनां स्वीकारात्तत्कथमियमाशंका प्रादुर्भवेदिति चेत् सत्यम् । यथा दध्याद्याश्रित पात्राकाशे स्थितस्यापि दध्यादि वस्तुनो वस्तुतस्तादृशपात्रादिरेवधारको न त्वाकाशो धारक आकाशेन सह दध्यादीनां वृत्तिनियामक सम्बधाभावात् ! परन्तु आकाशः केवलमवकाशात्मनोपकरोति । एवं शरीरमध्यवर्तिनि दहराकाशेस्थितस्य द्यावा पृथिव्यादि भोग्यादिजातस्य देह एव धारको भवति । दहराकाशस्तु केवलं तत्रावकाशत्वेनोपकरोति द्यावा पृथिव्यादिकम् । यद्वा दहराकाशो घटाद्यवच्छिन्नाकाशविलक्षणत्वात् स स्वत एव धारको भवतु द्यावा पृथिव्यादे स्तथापि तस्य दहराकाशस्य देहस्य जरा प्रध्वंसवत्वेन तदनुपद भावि जरा प्रध्वंसवत्वात् । यावत्पर्यन्तं शरीरं भारधारणानुकूलं सामर्थ्यं विभर्ति तावत् पर्यन्तमेव तत्स्थितस्य दहराकाशस्य द्यावा पृथिव्यादि धारकत्वम् । शरीराभावे तदाश्रिताकाशस्याप्यवस्थातुमशक्यत्वादिति फलतो देह एव द्यावा पृथिव्यादीनां सर्वेषां धारक इति पर्यवस्यति । इति शरीरविनाशे किं तत्रातिशिष्यते न किमप्यति शिष्यते । यतो देहविनाशे देहाश्रित सर्वेषां विनाशादि इति युक्त एवा शिष्यस्याक्षेप इति ॥ ४ ॥

( स ब्रूयादित्यादि )। यथोक्तं प्रकारेण शिष्येण कृत प्रश्नः स

**एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्मा-पहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति**

आचार्यो ब्रूयात् तदुत्तरं प्रयच्छेत्। हे शिष्य! अस्य देहस्य जरया विनाशेन एतत् पूर्वोक्तं देह मध्यान्तर्गतं आशाख्यं परं ब्रह्म यस्मिन् पृथिव्यादिकं सर्वं तत्रनिविष्टं तद्ब्रह्म न जीर्यति न विनाशमाप्नोति। तथाऽस्य शरीरस्य वधे शस्त्रादिना प्रतिहते सति न तत् ब्रह्म हन्यते प्रतिहतं न भवति। अर्थात् एतद्दहराकाशाख्यं ब्रह्मभोग्य भोगस्थान भोगोपकरण भोक्तृवर्गादिशालितया नगरवत् वर्तमानम्। नतु घटादिवत् केवलमवकाशरूपेणोपकारकम्। यथा पुरादिकं भोग्य भोगस्थान भोगोपकरणादीनां स्वत एवाधार भूतम्। न तु दध्यादि वस्तूनां घटाका-शादिवदाकाशात्मनोपकारकम्। तद्वत् प्रकृतेपोति भावः। ननु शरीरादि विनाशे तत् ब्रह्म कथं न प्रतिहतं भवति। कथं वा शरीरदोषेण स्पृष्टं न भवति, ब्रह्मेत्याशंकायामाह ( एतदित्यादि )। एतद् ब्रह्म सत्यं निर्वि-कारम्। सर्व प्रकारक विकार रहितं ब्रह्मपुरम्। अतएव निर्विकारत्वाद्देह जरा मरणानुविधायिजरामरणकं ब्रह्म न भवति। यद्वा चेतनाचेतन नियामकत्वमेव सत्यत्वम्। ततश्च सत्यत्वादतिसूक्ष्मत्वाच्च शरीरादि धर्म सम्बन्धि तद्ब्रह्म न भवतीति भावः। एवमनित्याद्याक्षेपं परिहृत्य "किं तदत्र विद्यते"। इत्यादिनाअन्तर्वर्ति विशेष जिज्ञासा कृतानां निवर्तयितुमाह ( अस्मिन्नित्यादि ) अस्मिन् पुण्डरीकोपलक्षिते परब्रह्मणि सर्वे कामाः समाहिताः तत्र काम्यन्ते इति कामाः कल्याणगुणाः ते सर्वे अत्रैव स्थिताः। क अत्र दहराकाशः कः स च कैः कल्याण गुणै र्विशिष्ट इति शिष्य जिज्ञासायामाह ( एष आत्मेत्यादि )। एष आत्मापहतपाप्मा तत्रापहतो विनष्टः पाप्मा धर्माधर्माख्यो यस्य सोऽपहतपाप्मा तथा विजरो विगतजरो विमृत्युश्च एवं विशोको विगतशोकः, शोको नाम इष्टादि

**यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥**

वियोग जनितो मानसः सन्ताप विशेषः, तेन सर्वथा रहितः । विजिघित्सः अशनादीच्छा रहितः । अपिपासः पानेच्छा रहितः । सत्यकामः सत्याः कामा विद्यन्ते यस्य स तथा संसारिणां कामाः वितथाः ईश्वरस्य कामास्तु तद्विपरीताः । तथा सत्य संङ्कल्पः काम कारणीभूत सङ्कल्पा अपि परमेश्वरस्य सत्या एवेति । यद्यपि परमेश्वरे पापप्रतिषेधात् तत्कार्यभूताः जरादयोऽपि प्रतिसिद्धा एव भवन्ति । इति पुनस्तन्निराकरणाय विजर इत्यादिपदमनर्थकमिव प्रतिभाति । तथापि यथा धर्मकार्य सुखव्यतिरिक्त स्वाभाविकसुखं परमेश्वरे तद्वत् अधर्मकार्य जरादि व्यतिरिक्त स्वाभाविक जरादीनां प्रतिषेधाय विजर इत्यादि पदोपादानं समीचीनमेव । अत्र चापहतपाप्मेत्यत्र पाप शब्दः सुकृत दुष्कृतोभय साधारणः । परमात्मप्रकरणे 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इत्यादौ पुण्येऽपि पाप शब्दस्य प्रयोग दर्शनात् । 'एते वै निरवास्तात स्थानस्य परमात्मनः' इति सुखास्पद स्वर्गादीनामपि मुमुक्षु निष्टत्वेन स्वर्गादिजनककर्मणो मुमुक्षु प्रत्यनिष्टजनकत्वेन स्वर्गादिजनक धर्मस्यापि पाप शब्द वाच्यत्वं भवत्येव । तथा अपहत पाप्मत्वं न ध्वस्त पाप्मत्वम् । किन्तु पापसंश्लेषराहित्यम् । यतः 'नैनं' सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतमित्यादौ सुकृत दुष्कृत प्राप्तेः । परमेश्वरेऽभाव श्रवणात् इति । ( यथा हीत्यादि ) । यथा येन प्रकारेण इह अस्मिन् लोके प्रजालोकाः यथानुशासनम् राजशासनानुरोधेन अन्वाविशन्ति । राजानमनुसरन्ति । राज शासनानुसारेण किं कुर्वन्ति तत्राह ( यं यमित्यादि ) । यं यमन्तं यत् यत् फलं कर्मणः फल जनकत्वेन फले जाते कर्म विनश्यतीति फलमेव कर्मणोऽन्तम् । ततश्च यत् यत् फलन अभिकामाः अभ्यर्थिनो भवन्ति । यं जनपदं देशम्

**तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्य-चितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु-**

क्षेत्रभागं वा कामयन्ते तं तमेवोपजीवन्ति। यथेह राजशासनानुरोधेन देश क्षेत्रादिमुपजीवन्ति प्राप्नुवन्ति। तथा परलोकेऽपि फलभोक्तारः पराधीना एव भवन्ति। नतु स्वतंत्रा भवन्ति। यथेह लोके तथैवपर-लोकेऽपीत्यर्थः ॥ ५ ॥

एवं कर्मसाध्य परलोके पराधीनतां दर्शयित्वा परलोकस्य क्षयित्वमपि दर्शयितुमाह 'तद्यथेहेत्यादि'। तद्यथा येन प्रकारेण इहास्मिन् लोके राजा-नुशासिते कर्मचितः पुण्येन कर्मणा कृष्यादि कर्मणा राजसेवादि कर्मणा वा चितोऽर्जित उत्पादितो धान्य धनादि लोकः क्षीयते उपभोगादिना एवमेवा-नेनैव प्रकारेण अमुत्र स्वर्गादौ परलोके पुण्यचितः पुण्येन कर्मणा सम्पादितो लोकः क्षीयते। उपभोगेन "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति स्मृतेः। तद्य यस्मात् कारणात् सुकृत जनित परलोके पारतन्त्र्यं क्षयित्वादिकं तस्मात् कारणात् ये जना इहलोके आत्मानं यथोक्त रूपं अननुविद्यः यथोक्तमात्मानं अपहतपाप्मत्वादीन् एतांश्च सत्यान्नित्यान् कामान् काम्यमानान् कल्याणगुणगणांश्चानुपास्य व्रजन्ति। परलोकं गच्छन्ति। तेषां सर्वेषुलोकेष्वकामचारो भवति। सर्वलोक काम-चाराभावो भवति। पारतंत्र्यं भवतीति यावत्। ( अथ ये इत्यादि ) ये तु समुपासकाः इहैव यथोक्तमात्मानं अपहतपाप्मत्वादींश्च काम्यमानान् कल्याणगुणाश्चानुविद्य शास्त्राचार्योपदेशादिना समुपास्य व्रजन्ति परलोकं गच्छन्ति। तेषां तादृशोपासकानां सर्वेषु लोकेषु कामचारो भवति। अर्थात् तादृशाः पुरुषा ब्रह्म विभूति भूतान् त्रिकारलोकान् समनुभूय

लोकेषु कामचारो भवति ॥ ६ ॥

इति छान्दोग्योपनिषदः अष्टमाध्यायस्य
प्रथमः खण्डः ॥१॥

## अथ अष्टमाध्यायः द्वितीयः खण्डः ।

स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥ १ ॥

अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ॥२॥

अथ यदि भ्रातृलोककामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते ॥३॥

यथाकामं तृप्ताः सन्तो न पारतंत्र्यमनु भवन्ति । किन्तु सर्वत्र तस्य स्वातंत्र्यमेव भवतीति भावः ॥ ६ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

स उपासको मुक्तः सन् यदि पितृलोककामो भवति । अतीतानेक जन्म सम्बन्धि पितृ समुदायस्य वर्तमानकालिक दर्शन विषयकेच्छावान् भवति । तदाऽस्य दिदृक्षोः संकल्पमात्रादेव इच्छयैव । अत्र मात्र पदं सङ्कल्पव्यतिरिक्तस्य कारणतां निरस्यति । पितरोऽनेक जन्म सम्बन्धिनः पितरः समुत्तिष्ठन्ति । समुपस्थिता भवन्ति । प्रत्यक्षं प्रति विषयस्य कारणत्वात् संकल्प जाताः पितरस्तत्रैवोपस्थिता भवन्ति । तेन संकल्पजातेन पित्रा सम्पन्नः सहितो युक्तो महीयते महिमावान् भवति पूज्यते इत्यर्थः ॥ १ ॥

**अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते॥४॥**

**अथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पनो महीयते ॥ ५ ॥**

**अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥**

**अथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुतिष्ठतस्तेनान्नपानलोकेन संपन्नो महीयते ॥ ७॥**

**अथ यदि गीतवादित्रलोककामो भवति संकल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते ॥ ८ ॥**

**अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥**

अथ यदि मातृलोककामो भवतीत्यादिकं सर्वं पूर्ववदेव व्याख्येयम् विशेष वक्तव्याभावादिति ॥ २ ॥ ३ ॥ ४ ॥

( अथ यदि सखिलोक कामो भवतीत्यादि )। तत्र सखानाम यश्च सम प्राणो भवेत्। अथ यदि मुक्तः सन् सखायं द्रष्टुमिच्छति तदा सखायः समुपस्थितो भवति। तदुक्तम् "अत्यागसहनो बन्धुः सम दुःख सुखः सुहृत्। तुल्यक्रियं भवेन् मित्रं समप्राणः सखा मत" इति। अथवा सखि पदं सर्व बन्धु बान्धव मित्रादीनामुपलक्षकमिति।

**यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥ १० ॥**

**इति छान्दोग्योपनिषद अष्टमाध्यायस्य**
**द्वितीयः खण्डः ॥ २ ॥**

## अथ अष्टमाध्यायः तृतीयः खण्डः ।

**त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानां**

( यं यमन्तधित्यादि ) । अथ यदि स उपासको मुक्तः सन् यं यमन्तं फलम् यं वा कामं काम्यमानमिष्टं वस्तु कामयते इच्छति स सर्वोऽपि पदार्थ स्तस्येच्छामात्रादेव समुत्तिष्ठति समुपस्थितो भवति । तेनोपस्थितेन संकल्पजनितेन पदार्थेन सम्पन्नो युक्तो महीयते महिमानमनुभवति पूज्यते इति ॥ ५–१० ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य
द्वितीयः खण्डः ॥२॥

( त इमे इत्यादि ) ते परमात्मनि व्यवस्थिता ये इमे सत्याः निर्विकारा अपहतपाप्मत्वादयः कामाः कल्याणगुणाः ते अनृतापिधानाः अनृतं कर्म अपिधानमाच्छादकं येषां ते अनृतापिधानाः । कर्मणा आच्छादिता इत्यर्थः । अत्रानृतशब्दः ऋतेतर विषयः । ऋतमिति कर्मनाम । ऋतं कर्मफलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत् प्राप्ति-फलम् । इह खलु तद्व्यतिरिक्तफलं सांसारिकफलं कर्म अनृतं ब्रह्म-प्राप्ति प्रतिद्वन्द्वी । तेषां सत्यानां निर्विकाराणां सतां विद्यमानानामेव अनृत कर्म अपिधानं पिधायकं भवतीति । एवञ्च जीवात्मभूतपरमात्मनि विद्यमाना अपहत पाप्मत्वादयः कल्याणगुणाः कर्मात्मका विद्यया आच्छादिता न जीवानां पुरतः प्रतिभासमाना भवन्तीति । ( यो यः इत्यादि ) अस्योपासकस्य जीवविशेषस्य यो यो बन्धुवर्गादिः पुत्रो

**सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥**

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा**

भ्राता वा इष्टवर्गः इतोऽस्माल्लोकात् प्रैति म्रियते । तं इष्टं बन्धुवर्गादिकं न दर्शनाय लभते तस्य दर्शनं भवति । विद्यमानमपि दहराकाशे कर्मणाऽऽच्छादितत्वादिति ॥ १ ॥

( अथ ये चेत्यादि ) । अथास्य उपासकस्य ये जीवा जीवन्तो भ्रातरः पुत्रादयो वा ये च प्रेता मृता यच्चान्यत् वस्त्रपात्रादिकम् इच्छन् न लभते न प्राप्नोति । सर्वं तदभिलषितं वस्तु अत्र गत्वा दहराकाशं । परमात्मानं प्राप्य विन्दते लभते । यस्मात्कारणादत्र परमात्मनि अस्योपासकस्य सत्याः कामाः काम्यमानाः भोग्यभूता अपहतपाप्मत्वादिकाः एतस्मिन् वर्तमानाः पूर्वं अनृत शब्दवाच्य कर्मणा आच्छादिता । इदानीं तु दहराकाशं परमात्मानं प्राप्तस्योपासकस्याविर्भूताभवन्ति । पूर्वमाच्छादिता आच्छादिता अपीदानीं प्रादुर्भूता भवन्तीत्यर्थः । अतो निरतिशय भोग्यत्वमिति । अत्रार्थेऽनुरूपं दृष्टान्तमाह ( तद्यथेत्यादि ) । तद्यथा येन प्रकारेण हिरण्यनिधिं हिरण्यमेव निधिस्तं पृथिव्यां निहितं भूमेरधस्तात् निक्षिप्तम् । अक्षेत्रज्ञाः निधिशास्त्रोपदेशाभावेन निधिविशिष्ट भूमिविज्ञानविकलाः प्रतिदिनं निधेरुपर्युपरि संचरन्तो गमनागमनं कुर्वन्तोऽपि निधिं सुवर्णात्मकधनं न विन्देयु र्न लभन्ते । एवमेवेमाः परिदृश्यमानाः सर्वाः प्रजाः सर्वे जीवाः सुषुप्तिसमये अहरहः प्रतिदिनं गच्छन्त्यः सुषुप्तिकाले ब्रह्मणा अविभागं

अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥

स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदय मिति तस्माद्धृदयमहरहर्वा एवं वित्स्वर्गं लोकमेति ॥ ३ ॥

अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं

प्राप्तवत्य एतं ब्रह्मलोकं दहराकाशाख्यं ब्रह्मलोकं न विन्दन्ति न लभन्ते न जानन्तीति, यदहं ब्रह्मणा अविभागं प्राप्तोऽस्मि, तत्र कारणमाह ( अनृतेन हीत्यादि ) अनृतेन कर्मणा प्रत्यूढाः स्वभावान्तरं प्रापिता आच्छादिता इत्यर्थः ॥ २ ॥

स वै यः 'आत्मापहतपाप्मा' इत्यादिना प्रकृत आत्मा तस्य हृदयान्तर्वर्तित्वं पूर्वोक्तमेव मंत्रः स्मारयति ( स वा एष इत्यादि )। स वा एष आत्माहृदि एषोऽपहतपाप्मत्वादि कल्याणगुणक आत्मा हृदयस्य मध्ये वर्तते इत्यर्थः। हृदयशब्द नामनिर्वचनेनाऽपि आत्मनो हृदयान्त-र्वर्तित्वं सिद्ध्यति :—तदेव श्रुतिर्दर्शयति तस्यैतदेवेत्यादि। तस्यैतस्य हृदस्यैतदेव निरुक्तं निर्वचनं हृदयमिति। हृदयस्य मध्येऽयमात्मा वर्तते इति हृदयशब्दस्य निर्वचनमित्यर्थः। तस्मादेतत् हृदयमिति। ( अहरहर्वेत्यादि ) ? एवंवित् एतादृश दहराकाशस्योपासनायां विद्यमान् उपासकः अहरहर्वा प्रतिदिनं प्रायण पर्यन्तं स्वर्गं विलक्षण सुखात्मकं लोकं लोक्य-मानं परमेश्वरं ब्रह्म एति प्राप्नोति। यद्यपि स्वर्गशब्दः इन्द्रादिलोक परकस्तथापि प्रकृते न तद्बोधकः। किन्तु ब्रह्मपरक एव। यतो ब्रह्मो-पासनायां निरतस्योपासकस्य तत्क्रतुन्यायात् ब्रह्मप्राप्तिफलस्यैवोच्यमानत्वेन प्रसिद्ध स्वर्गलोकप्राप्ति फलस्यासंभवात्। तस्मात् प्रकृते स्वर्गपदं विलक्षण सुखात्मक ब्रह्मपरकमेव नतु प्रसिद्ध स्वर्गपरकमिति ॥ ३ ॥

अथ ब्रह्मोपासकस्य कथं ब्रह्मप्राप्तिः। ब्रह्मप्राप्तस्य वा किं भवति

**ज्योतिरूपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥**

**तानि ह वा एतानि त्रीण्यक्षराणि सत्तियमिति तद्य त्सत्तदमृतमथ यत्तितन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥५॥**

**इति छान्दोग्योपनिषद अष्टमाध्यायस्य तृतीयः खण्डः ॥३॥**

तत्राह :—'अथ य एष' इत्यादि । अत्राथशब्दः प्रकृतापेक्षत्व प्रदर्शकः । अथ य एषः संप्रसादो जीवः संप्रसीदति यत्रेति व्युत्पत्या संप्रसादशब्दः । सुषुप्तिस्थानवाचकः । तादृश सुषुप्तिस्थानवाचक संप्रसादशब्दसंबन्धात् जीवो लक्षितो भवति । एषः संप्रसादोऽहरहर्वा इत्यादि पूर्व वाक्य प्रदर्शितो ब्रह्मोपासको जीवः । अस्मात् सर्वदुखास्पदत्वेन परिदृश्यमानात् शरीरात् समुत्थाय निष्क्रम्य परंज्योतिर्देशविशेषे विद्यमानं परमात्मनमुपसम्पद्य सम्प्राप्य स्वेन रूपेण विनिष्पद्यते । (एष आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्मेति ) अत्रामृतमभयं इत्यादि शब्दाः परंज्योतिरूपसंपद्येति पूर्ववाक्यनिर्दिष्ट परज्योतिशब्दशब्दित ब्रह्मवाचका यतस्तस्यैव प्राप्यत्वेन प्रधानत्वात् । अव्यवहितोऽपि स एव परमात्मा ततस्तस्यैव ग्रहणमिति । तस्य ह वा एतस्य ब्रह्मणः सत्यमिति नाम भवतीति भावः ॥ ४ ॥

तानि ह वा एतानि त्रीण्यक्षराणि सत् इत्येकं ति इति द्वितीयं य मिति तृतीयं । सत् ति यमिति त्र्यक्षरात्मकं सत्यनाम इति । तत्र यत् सत् इति तत् अमृतादिगुणकं यत् ति इति तत् मर्त्यात्मकं रूपम् प्रकृते अमृतशब्दः मर्त्यशब्दश्च चेतनमचेतनं च निर्दिशति । अथ यत् यम् इति शब्दः तेन उभे चेतनाचेतने यच्छति यस्मादनेनोभे यच्छति तस्मात् कारणात् यमिति अहरहर्वेत्यादि पूर्ववत् ॥ ५ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

# अथ अष्टमाध्यायः चतुर्थः खण्डः ।

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं**

योयमपहतपाप्मत्वादि कल्याणगुणक आत्मा स एव सर्वलोकानां भूरादीनां विधारक इति दर्शयितुमाह :—अथ य आत्मेत्यादि । अथ आत्माऽपहतपाप्मत्वादिगुणकः स सेतुरिव सेतुर्विधृति र्विधारकः कथ-मयमात्मा सेतु विधृति स्तत्राह :—एषां लोकाना मित्यादि । एषां भूरादि लोकानामसंभेदायासङ्कराय संभेद । साङ्कर्यम् असंभेदोऽसाङ्कर्यम् । तदर्थमयमाशयः :—यद्ययं सर्वनियामकः परमात्मा स्वकीय शासनेन भूरादिकं जगत् न धारयेत् तदा सर्वधर्माणां साङ्कर्यमेव भवेत् । ततश्च घटधर्मो घटत्वं पटादिष्वपि समवेयात् । पटधर्मश्च पटत्वं घटादि । एवं वह्निधर्म औष्ण्यं जले जलधर्मश्च शैत्यमग्नौ गच्छेत् । ततश्च सर्वापि व्यवस्थोच्छिन्ना स्यादिति व्यवहाराभावः प्रसज्ज्येत । परमात्मना नियन्त्रितास्तु सर्वे धर्माः स्वाधिष्ठानं विहायान्यत्रागच्छन्तः संपादयन्ति । असँकुलतया स्व स्व व्यवहारम् स्वस्मिन् चिदचिद्वस्तुजातमसंकीर्णं सिनोति बध्नातीति सेतुरिति सेतु पदव्युत्पत्तेः । एतं सेतुभूतं परमात्मानम् अहोरात्रे रात्रिंदिनं न तरतो न प्राप्नुतः परिच्छेदकतया यथा अन्ये संसारिणोऽहोरात्राभ्यां परिच्छिन्ना भवन्ति न तथायं परमात्मा । तथा न जरा प्राप्नोति न मृत्यु र्न शोको न सुकृतं धर्मलक्षणम् । न दुष्कृतं पापलक्षणम् । सर्वे एते पाप्मानः अहोरात्रादारभ्य दुष्कृतान्ताः । अतः परमात्मनः सकाशात् निवर्तन्ते निवृत्ता भवन्ति । यद्यपि शोका-दिषु पाप्म शब्दस्यामुख्यत्वं तथापि सुकृतदुष्कृतयोरुभयोरपि मुमूक्षोरनिष्ट साधकतयाऽनिष्ट साधनत्व लक्षण पाप्म शब्द प्रवृत्ति निमित्त सद्भावात् मुख्य एव पापशब्द इति । परमात्मानं पाप्मानः कथं न प्राप्नुवन्ति ।

**न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥**

**तस्माद्वा एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति**

तत्राह :–अपहतपाप्मा ह्येष ब्रह्मलोकः। हि शब्दोऽत्र हेत्वर्थक स्तथा च यस्मात् कारणात् अयं परमात्मा अपहतपाप्मा तस्मात् कारणात् सर्वे पाप्मानोऽतो निवर्तन्ते। ब्रह्मरूपो लोक एषः अपहतपाप्मा:। पापहेतु कर्मणामाचरणेऽपि पापोत्पत्ति प्रतिबन्धक शक्तिमत्त्वमेव। तत्रापहत पाप-मत्वं यत एवं तस्मात् कारणात् पाप शब्दमुख्यार्थ सुकृतदुष्कृतयोस्तत् कार्य जरा रोगादीनां परमात्मनि न प्रसक्ति र्भवतीति भावः ॥ १ ॥

( तस्माद् वेत्यादि )। यस्मात् कारणात् परमात्मा अपहतपाप्मा तस्मात् कारणात् एतं परमात्मानं सेतुभूतं तीर्त्वा प्राप्य पूर्वमन्धोऽपि सन् अनन्धो भवति। परमात्मप्राप्त्या दिव्यदेहयुक्तो भवतीति विद्धः। पूर्वमायुधादिना विद्ध देहोऽपि संप्रत्यविद्धो भवति। उपतापी पूर्वं ज्वरादि तापयुक्तोऽपि परमात्मलक्षणसेतु प्राप्त्याऽनुपतापी भवति। आधि-दैविकाधिभौतिकाध्यात्मिक ताप निवृत्तो भवति। तावदेव हि जीवस्य स्व स्व कर्मबलात् आध्यात्मिकादयः संसारतापास्तत्तत् काले प्रादुर्भवन्ति यावत् खलु परमात्मा उपासनया दृष्टो न भवति। प्राप्ते तु तस्मिन् दिव्यदेह प्राप्त्या सकलताप व्यपगतो भवतीति। यस्मादेवं तस्मात् कारणात् एवं परमात्मलक्षणसेतुं तीर्त्वा संप्राप्य नक्तं रात्रिरपि अहरेव दिवाभि-निष्पद्यते भवति। अयं भाव :–चाक्षुष वृत्तेरनुग्राहकं दिनं रात्रिस्तु तस्याः प्रतिबन्धकं। परन्तु तमिस्रा रात्रिरपि परमात्मानं प्राप्तस्य दिवैव भवति। कृतपरमात्मसाक्षात्कारस्याज्ञानलेशाभावात् दिनतुल्यैव रात्रिरपि भवति। अहोरात्रयो र्न कश्चिदपि विशेषो भवतीति भावः। कस्मात् कारणादहो-

तस्माद्वा एतं स्वेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोक स्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥

इति छान्दोग्योपनिषद अष्टमाध्यायस्य चतुर्थः खण्डः ॥४॥

## अथ अष्टमाध्यायः पञ्चमः खण्ड ।

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण

रात्रयो वैलक्षण्यं न भवति परमात्मप्राप्तस्य तत्राह सकृद्विभात इत्यादि । एषोऽपहतपाप्मत्वादि गुणकतया पूर्वोक्तो ब्रह्मलोको ब्रह्मैवलोकः । हि शब्दो हेत्वर्थकः । यस्मात् कारणात् सकृद्विभातो नतु असकृत विभात विभानविच्छेदन पुनर्विभानेऽसकृदनेकवारं विभातो भवेत् । अत्र विभान विच्छेदाभावे न सर्वदा ब्रह्म स्वरूप प्रकाशस्यानावृततया भासमानत्वेन सकृत् विभात एवेति ॥ २ ॥

( तद्य एवेत्यादि ) तत् तत्रैवं सति ये उपासका एतमपहतपाप्मत्वादि गुणकं सर्वस्य सेतुभूतं परमात्मानं चिदचिच्छरीरकं ब्रह्मचर्येण कमनीय-कामिनी विषयकाभिलाषा परित्यागात्मक ब्रह्मचर्यपुरःसर शास्त्राचार्यो-पदेशादिना अनुविन्दन्ति जानन्ति तेषामेवोपासकानामेष ईदृशो ब्रह्मलोकः । अर्थात् सकृद्विभानादि लक्षण ब्रह्मलोकस्य प्राप्तिर्भवति । तथा तेषां सर्वेषु लोकेषु कामचारो भवति सर्वलोकानुभवो भवति । नतु यथोक्त ब्रह्मचर्य रहितानाम् कान्तकामिनी तृष्णाज्वराकुलानामिति ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

पूर्वनिर्दिष्टं ब्रह्मलोकसाधनं यद्ब्रह्मचर्यं तं स्वरूपतो ब्रह्मलोक साधनतां प्रदर्श्य कार्यरूपेणाऽपि ब्रह्मचर्यस्य ब्रह्मलोकसाधनत्वमिति

**ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥ १ ॥**

**अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण**

ब्रह्मचर्यं स्तुत्यर्थमाह :—अथ यद् यज्ञ इत्यादि । अथ लोके यत् पाकयज्ञ हविर्यज्ञ ज्योतिष्टोमादिकं वैदिकं वेदोक्त साध्यसाधनेतिकर्त्तव्यताविशिष्टं कर्मयज्ञ इति कथयन्ति पूर्वमीमांसकाः । तत्सर्वं ब्रह्मचर्यमेव ब्रह्मचर्य साध्यत्वात् । साध्यसाधनयोरभेदादिति । अथ यज्ञस्य ब्रह्मलोकसाधकं यत् ब्रह्मचर्यं तत्साध्यत्वं कथमिव संभवति । यतो ब्रह्मलोक प्राप्तिकारण ब्रह्मचर्यस्य यज्ञोद्वारं न भवति, इत्याशंकानिवर्तयितुं ब्रह्मचर्य साध्य ब्रह्मलोकप्राप्तिसाधनस्य ज्ञानस्यापि यज्ञरूपत्वात् । ज्ञानसाधनस्य ब्रह्मचर्यस्य यज्ञ कारणत्वमप्यस्तीति कथनार्थमेक शब्दरूपितत्वेन तयोरैक्यं दर्शयति :—ब्रह्मचर्येणेत्यादि । हि शब्दो हेत्वर्थकः । यस्मात्कारणात्ब्रह्मचर्येणैव हि यो ज्ञाता तं ब्रह्मलोकं विन्दते प्राप्नोति । ब्रह्मचर्यपूर्वक ब्रह्मज्ञानवानेवोपासक स्तं ब्रह्मलोकं प्राप्नोति । यो ज्ञाता ब्रह्मचर्येणेति कथनेन यो ज्ञातेत्यस्य ब्रह्मचर्यसाध्यत्वं ज्ञायते । यो ज्ञातेति शब्दैकदेशस्य यो ज्ञशब्दस्य यज्ञशब्दस्य च समत्वकृताभेदाध्यवसायेन तदर्थाभेदाध्यवसायमूलक यज्ञस्यापि ब्रह्मचर्यसाध्यत्वमेवेति । ( अथ यदिष्टमित्यादि ) अथ यत् इष्टमित्याचक्षते लौकिकाः तदपि ब्रह्मचर्यमेव । यतो ब्रह्मचर्यात्मक साधनेन तं परमात्मानमिष्ट्वा पूजयित्वा तं परमात्मानमनुविन्दते प्राप्नोति । ब्रह्मलोकप्राप्तिसाधनस्य परमात्मपूजनादेः ब्रह्मचर्यप्रयोज्यतया परमात्मपूजनस्य दर्शादियागानां च इष्टचेत्येकदेश शब्दरूपितत्वेनाभेदाध्यवसायात् । अत इष्टमपि ब्रह्मचर्यमेवेति ब्रह्मचर्यस्तुतिरिति ॥ १ ॥

( अथ यत्सत्राणमित्यादि ) अथ यत् सत् त्रायणमित्याचक्षते कथयन्ति लोकास्तदपि ब्रह्मचर्यमेव यतो ब्रह्मचर्यद्वारेणैव सतः परमात्मनः

ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥ २ ॥

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयं सरस्तद-

आत्मन उपासकस्य त्राणं रक्षणं भवति। तस्मात् सत् त्रायणमपि ब्रह्मचर्यमेव ब्रह्मलोकप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य विषयान्तर विमुखी लक्षणस्य सत् शब्दितात्मरक्षणस्य गवामयनादि सत्रस्य च सत् त्रायणो लक्षणैक शब्द रूपितत्वेनाभेदाध्यवसायात् सत्त्रायणं ब्रह्मचर्यमेवेति भावः। (अथ यत् मानमित्यादि) अथ यन्मौनं वाङ् नियमनलक्षणमित्याचक्षते कथयन्ति तदपि मौनं ब्रह्मचर्यमेव, यस्मात् ब्रह्मचर्यलक्षण साधनेन युक्त एवोपासकः। शास्त्राचार्यद्वारा आत्मानं परमात्मानमनुविद्य ज्ञात्वा मनुते तदीयध्यानं करोति। तस्मान्मौनशब्दोऽपि ब्रह्मचर्यमेवेति ॥ २ ॥

(अथ यदनाशकायनमित्यादि) अथ यत् अनाशकायनमित्याचक्षते कथयन्ति तदपि ब्रह्मचर्यमेव तत्। यमात्मानं ब्रह्मचर्येणानुविन्दते प्राप्नोति। एष आत्माऽस्य न नश्यति विनष्टो न भवति। तस्मादनाशकायनमपि ब्रह्मचर्यमेव। ब्रह्मचर्यसाध्य नाशाभावलक्षणफलस्य अनशनस्य च अनाशकायन शब्देन सहैक्य कृतोऽभेदो भवति। आशोऽशनम्। आशोनाशः। नाशो न भवति इत्यनाशः। एवं क्रमेणैक शब्दरूपितत्वं द्वयोरिति भावः। अथ यत् अरण्यायनं तदपि ब्रह्मचर्यमेव। यत इतो भूलोकमपेक्ष्य तृतीयस्यांदिवि। तृतीये द्युशब्दशब्दिते ब्रह्मलोके अरण्यनाम कार्णवौ समुद्रौ विद्येते। तस्मात् कारणात् अरण्यायनस्य ब्रह्मलोकस्यारण्यवासस्य चारण्यायन शब्देनाभेदो भवति। अत्र परमात्म-

**श्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम् ॥ ३ ॥**

**तद्य एवैतावरश्च ण्यश्चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु**

लोकस्य तृतीयत्वकथनम् । भूलोकं चतुर्मुखलोकान्तरिक्षलोकं चापेक्ष्य न तु कमलासनलोकस्य तृतीयत्वमिति । कीदृशो ब्रह्मलोक इति जिज्ञासमानं प्रतिकानिचित् । भगवल्लोकचिह्नानि दर्शयति श्रुतिः :—तदैरम्मदीयमित्यादि तत् तत्र ब्रह्मलोके ऐरम्मदीयं सरः एतन्नामकं सरो विद्यते । इरया अमृतेन सुधयेति यावत् । माद्यन्तेऽतिशयेन तृप्ता भवन्ति यस्मिन् तत् ऐरम्मदीयम् । अमृतप्रचुरं सर इत्यर्थः । तत् तत्र ब्रह्मलोके सोमसवनः सोमनसवननामा अश्वत्थ वृक्षश्चास्तीति तत्र सोमश्चन्द्रः । तद्वत् आह्लाद जनकत्वात् अश्वत्थः सोमसवनः । तत् तत्र ब्रह्मलोके अपराजिता नाम्नी ब्रह्मणः पूः नगरी विद्यते । अकृतब्रह्मोपासकेन सा पुरी प्राप्तुमशक्या तस्मात् अपराजितेति ॥ ३ ॥

प्रभुविमितं हिरण्मयम् ) तत्र 'प्रभुणा' सर्वसमर्थेन भगवता विमितं विशेषेण मितं स्वभोगभूमित्वेन विशेषतः परिगृहीतामिति प्रभुविमितम् । यद्यपि व्यापकेन भगवता सर्वमेव स्थानं व्याप्तमेव । तथापि नियमतो विग्रहविशिष्टतया तत्स्थानस्य सन्निधानात्तदेव स्थानं प्रभुविमितिम् । अतएव तादृश देशविशिष्ट भगवत्प्राप्तिरेव ब्रह्मप्राप्तिरिति । ( तद्य इत्यादि ) तत् तत्र ये उपासकाः ब्रह्मलोके विद्यमानौ अरश्च ण्यश्च एतन्नामको अर्णवौ ब्रह्मचर्येण ब्रह्मचर्यद्वारा अनुविन्दन्ति प्राप्नुवन्ति । तेषामेव ब्रह्मचर्यवताम् एषो यथाक्तो ब्रह्मलोको भवति । तथा तेषां सर्वेषु लोकेषु कामचारोऽपि भवति । एवं च ब्रह्मप्राप्तिसाधनीभूतारण्य शब्दितार्णवद्वयस्य प्राप्तिर्ब्रह्मचर्याधीनेति

कामचारो भवति ॥ ४ ॥

इति छान्दोग्योपनिषदः अष्टमाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

## अथ अष्टमाध्यायः षष्ठः खण्डः ।

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः॥१

ब्रह्मचर्यमेव सर्वसाधनेषूत्कृष्टमिति ब्रह्मचर्यस्तुतिरिति ॥ ४ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

इतः पूर्वम् अनुविद्य ब्रजन्तीत्यादिना ब्रह्मोपासकस्य गमनं कथितम् । गन्तव्यदेशोऽपि ब्रह्मलोकः प्रतिपादित एव । अतः परं केन यथा गच्छतीति मार्गं दर्शयितुं हृदयान्तर्वर्ति दहरोपासकस्य हृदयनाडीविशेषेण मूर्धपर्यन्त गतेनादित्य द्वारा मोक्षमुपवर्णयितुमयं नाडीखण्ड आरभ्यते । ( अथ या एता इत्यादि ) अथानन्तरं या एता वक्ष्यमाणा हृदयस्य पुण्डरीकसदृशस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यः पिंगलस्याणिम्नः पिंगल शुक्लादिरूपसहितस्य सूक्ष्मस्यान्नरूपरसेण व्याप्तास्तिष्ठन्ति विद्यन्ते तथा शुक्लस्य शुक्लरूपोपपन्नस्य नीलस्य नीलरूपयुक्तस्य पीतस्य लोहितस्य च सूक्ष्मान्नरसस्य व्याप्ताः तिष्ठन्ति । असौ परिदृश्यमान् आदित्यः सूर्यः पिंगलः एष शुक्लः एष पीत एष लोहितः आदित्यो हि शुक्लादि नाना रूपवानिति मधुविद्यायां प्रत्यक्ष सिद्धञ्च । ततश्चादित्यस्य नानारश्मिसम्बन्धादेव सूक्ष्मान्नरसस्यापि नाना रूपवत्वं भवति । विभिन्ना वर्णविशेषाः कथं भवन्तीति तु वैद्यक शास्त्रादेव जिज्ञासुभिरवगन्तव्याः ॥ १ ॥

**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमञ्चामुञ्चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥२॥**

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु**

वर्णविशेष विशिष्टानां च रश्मीनां नाडीभिः कथं सम्बन्ध इति दर्शयितुं दृष्टान्तमाह—तद्यथेत्यादि। तद्यथा येन प्रकारेण महापथः महान् पन्थाः आततो विस्तीर्णो राजमार्गः उभौ ग्रामौ गच्छति। इमं ग्राममुञ्च ग्रामम् ग्रामद्वयप्रविष्टो भवत्येक एव राजमार्गः। एवमेवानेनैव प्रकारेण आदित्यस्य एता रश्मयः किरणविशेषाः उभौ लोकौ गच्छन्ति। इमं चादित्यमण्डलं अमुञ्च पुरुषम् गच्छन्ति रश्मय इति। कथमादित्य रश्मीनां लोकद्वये प्रवेश इति क्रमं दर्शयति ( अमुष्मादित्यादि) अमुष्मादादित्यात् ताः रश्मयः प्रतायन्ते संतता भवन्ति। ता आदित्यमण्डला-न्निर्गता रश्मयः आसु पिंगलादि वर्णासु नाडीसु सृप्ताः प्रविष्टा भवन्ति। आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानलक्षणाः ते रश्मयः अमुष्मि-न्नादित्ये सृप्ताः प्रविष्टा भवन्ति। रश्मीनामुभयलिङ्गत्वात्। ताः ते इत्युभय-विधोपि निर्देशो भवति ॥ २ ॥

तद्यत्रैत इत्यादि ) तत् तस्मात् यत्र यस्मिन्काले एतत् स्वपनम् अयं शरीराभिमानी जीवः सुप्तो भवति कीदृशो जीवः तत्राह समस्त उपसंहृताखिलकरणसमुदायः। अतएव सम्प्रसन्नः। बाह्य विषय सम्बन्धजनित कालुष्यरहितत्वात् सम्यक् प्रसन्नः। अतएव स्वप्नं न विजानाति न पश्यति। सुषुप्तो भवतीत्यर्थः। तदा तस्मिन् काले आसु सूर्यतेजः पूर्णासु यथोक्तासु नाडीषु सृप्तः प्रविष्टो भवति। नाडी-द्वारेण हृदये संगतो भवतीत्यर्थः। तं सुषुप्तिगतं जीवं न कश्चन

**तदा नाडीषु सृप्तो भवति । तन्न कश्चन पाप्मा स्पृशति । तेजसा हि तदा संपन्नो भवति ॥ ३ ॥**

**अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥**

**अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वाहोद्वा मीयते स यावत्क्षिप्येन्म**

पाप्मा स्पृशति विद्यमानमपि कर्म तस्मिन् स्वकार्योत्पादक सामर्थ्यरहितं भवतीति । कथं तत्र पाप्मसंस्पर्शो न भवति । तत्राह तेजसा हि तदा सम्पन्नो भवतीति । तदा तस्मिन्काले तेजसा परमात्मनः सम्पन्नो भवति । प्रकृते तेजः शब्दः प्रकाशकत्व गुणसम्बन्धात् ब्रह्मपरकः । "सता सोम्य तदा सम्पन्नो भवतीति" श्रुत्यन्तरात् । अत्र ब्रह्मणि सम्पत्ति र्नाम शरीरेन्द्रियाधिष्ठातृत्वराहित्यात् । ब्रह्मण्यवस्थानं यद्यपि सम्पत्यधिकरण ब्रह्म तथापि करणत्वविवक्षया तत्र तृतीया विभक्तिः कारकाणां विवक्षाधीनत्वादिति ॥ ३ ॥

( अथ यत्रेत्यादि ) अत्राथ शब्दोऽर्थान्तरप्रदर्शनार्थकः । यत्र यस्मिन् समये अबलिमानं रोगादिप्रयुक्तदुर्बलतां नीतः प्राप्तो भवति मुमुर्षुर्भवतीत्यर्थः । तदा तत्काले अभितः परितः आसीनाः वर्तमानाः पुत्रादयः मां जानासि मां जानासि किमित्याहुर्वदन्ति । स रोगादिग्रस्तो मुमुर्षुर्यावत् पर्यन्तमस्मात् शरीरात् अनुत्क्रान्तो गतो न भवति तावत् पर्यन्तं सर्वानेव जानाति । अथ यत्र यदा एतस्मात् उत्क्रामति गतो भवति ॥ ४ ॥

अथोत्क्रमणानन्तरं स विद्वान् एतैरेवादित्यरश्मिभिः किरणैरूर्ध्वमाक्रामति । स विद्वान् ओम् परमात्मानं आह कीर्तयति स

नस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥

तदेष श्लोकः—शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विश्वङ्-ङन्या उत्क्रमणे भवन्ति। उत्क्रमणे भवन्ति ॥ ६ ॥

इति छान्दोग्योपनिषदः अष्टमाध्यायस्य षष्ठः खण्डः ॥६॥

च भगवन्नामकीर्तनं कुर्वन्नेव मीयते प्रमीयते। विदुषो मरणसमये परमात्मनो नामस्मरणं संभवति। स यावन्मनः क्षिपेत् तावदा-दित्यं गच्छति। शरीरत्यागानन्तरं मनोवेगेनादित्यं प्राप्नोतीति। एतदेव खलु विदुषां लोकद्वारं ब्रह्मलोकस्य द्वारं प्रपदनं प्राप्तिसाधनम् प्रपद्यते प्राप्यतेऽनेनेति प्रपदनम् मार्गः यश्चायमादित्यः। अयमेव चादित्योऽ-विदुषामकृत ब्रह्मोपासकानां निरोधो रोधकः अविदुषां सूर्यमण्डल-भेदनसामर्थ्याभावात् न तत्र गमनं भवति। तदुक्तं "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखोहत इति। तत्र परिव्राट् पदेन यथोक्त ब्रह्मोपासक एव कथितो भवति ॥ ५ ॥

ततश्चाविदुषां तत्र गमनं न भवतीति व्यज्यते इति। तदेष श्लोक इति। तत् तदैतदस्मिन् विषये एषो वक्ष्यमाणश्लोकोऽपि भवति। हृदयस्य पुण्डरीकाकारस्य सम्बन्धिन्यः एका शतं च नाड्यो भवन्ति। एकाधिकं शतं नाडीनां भवतीत्यर्थः। तत्रैका सुषुम्नाख्या मूर्धानमभिनिस्सृता। मूर्धन्य पर्यन्तं व्याप्ता तया मूर्धन्य व्याप्तया नाड्या ऊर्ध्वमायन् उपरि गच्छन् उपासको अमृतत्वं मोक्षमेति प्राप्नोति। अन्याः शतसंख्यका नाड्यः विश्वग्गतयो नानागतयः संसाराय उत्क्रमणमात्रे भवन्ति। किन्तु अमृतत्व प्रयोजकोर्ध्वंगतो न भवन्तीति भावः। उत्क्रमणे भवन्तीति द्विर्वचनं प्रकरण समाप्तिबोधकम् ॥ ६ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

## अथ अष्टमाध्यायः सप्तमः खण्डः ।

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापति रुवाच ॥ १ ॥

तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मान

इतोऽतीतप्रकरणेऽपहतपाप्मत्वादि कल्याणगुणविशिष्टतया परमात्मा कथितः । परमात्मोपासनेन च जीवसंकल्पमात्रादेव सर्वलोककामसिद्धिरपि प्रदर्शिता । तदर्थतया परं ज्योतिरुपसंपद्य स्वरूपेणाभिसम्पन्नो भवतीति तदपि कथितम् । तत् स्वरूपमपहतपाप्मत्वादिकमेवेति दर्शयितुं दहरविद्यां परिसमाप्य प्रजापतिविद्यां प्रस्तौति । अथ य आत्मेत्यादि । पूर्वं किल प्रजापति र्ब्रह्माकमलासन उवाच प्रोक्तवान् । किमिति प्रोक्तवान् तत्राह ( य आत्मेत्यादि ) यः खलु आत्मा अपहतपाप्मा सर्वदोषरहितः स्वभावत एव विजरो जरादिदोषविवर्जितो विमृत्युरन्तकभयवर्जितो विशोको मनोदोषरहितो विजिघत्सोऽशनादिदोषरहितोऽपिपासः पिपासया रहितः सत्यकामः सत्य संकल्पः स एतादृश आत्माऽन्वेष्टव्यः । शास्त्राचार्योपदेशादिभिर्ज्ञातव्यः स विजिज्ञासितव्यः । विशेषेण ज्ञातुमेष्टव्यः । स एतादृश आत्मोपासकः सर्वान् लोकानाप्नोति तथा सर्वान् कामान् प्राप्नोति य उपासकः तं पूर्वोक्त गुणकमात्मानमनुविद्य वाक्यार्थज्ञानविषयतामापाद्य विजानाति तदीय ध्यानं करोति । एवं प्रकारेण प्रजापतिरुक्तवानिति ॥ १ ॥

(तद्धोभयेत्यादि) तद् यदा कदाचिदुक्तं प्रजापतिवचनं देवा इन्द्रादयो

**मन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्चकामानिति इन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौहासंविदानावेव समित्पाणी प्रजापति सकाशमाजग्मतुः ॥ २ ॥**

**तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानम-**

असुरा विरोचनादयः उभयेऽपि ऐतिह्यरूपेण जनश्रुत्या अनुबुबुधिरे श्रुतवन्तः । ते देवासुरादय ऐतिह्यरूपेण प्रजापतिवचनं श्रुत्वा किं कृतवन्तस्तत्राह ते होचुरित्यादि । ते ह देवा असुराश्चोचुरुक्तवन्तः । हन्त तमात्मानमन्विच्छामो ज्ञातुमिच्छामः । यमात्मानमन्विष्य ज्ञात्वा सर्वान् लोकान् प्राप्नोति सर्वांश्च कामानाप्नोतीति तत्र देवानां मध्ये इन्द्रो देवराजः स्वयमेवतया असुराणां मध्यात् असुरराजो विरोचनश्च अभिवव्राज प्रगतवान् । तौ इन्द्रविरोचनौ परस्परमसंविदानौ परस्परमसूयया परस्परं संमन्त्रणमकुर्वाणौ एवाकुर्वन्तावेव समित्पाणी समिद्भारहस्तौ प्रजापतिसमीप विद्योपदेष्टुरभ्याशमाजग्मतुर्गतवन्ताविति ॥ २ ॥

तौ ह इन्द्रविरोचनौ द्वात्रिंशतं वर्षाणि द्वात्रिंशद्वर्षपर्यन्तं गुरोः शुश्रूषणे तत्परौ भूत्वा ब्रह्मचर्यमूषतुः ब्रह्मचर्यपालनं कृतवन्ताविति । तौ ह तदनन्तरं इन्द्रविरोचनौ प्रति प्रजापतिर्ब्रह्मा प्रोवाच । किमिच्छन् कं प्रयोजनविशेषमधिकृत्य युवाभ्यामूषितौ । तदनन्तरं तौ इन्द्रविरोचनौ ऊचतुरुक्तवन्तौ । हे भगवन्, य आत्माऽपहतपाप्मा विजरो विमृत्यु-

नुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्ताव-
वास्तमिति ॥ ३ ॥

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत
एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं

विशोको विजिघत्सोऽपिपासः सत्यसंकल्पः सत्यकामः सोऽन्वेष्टव्यः। स विजिज्ञासितव्यः। स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति। इति एवं रूपेण भगवतः पूज्यस्य तव वचो वचनमैतिह्य रूपेण जना वेदयन्ते जानन्ति। तं तादृशमात्मानं ज्ञातुमिच्छन्तौ आवां ब्रह्मचर्यमवास्तमुषितवन्ताविति ॥ ३ ॥

तदनन्तरं तौ इन्द्रविरोचनं प्रति प्रजापतिरुवाच। ( य एष इत्यादि ) य एषोऽक्षिणि नेत्रगोलके पुरुषो दृश्यते परिदृश्यमानो भवति एष एवात्मा यस्त्वया पृष्टः एतदात्मतत्वममृतं निरतिशय सुखस्वरूपं अभयं सर्वप्रकारकभयरहितं दुःखासंभिन्नमित्यर्थः। एतद्ब्रह्म असंकुचित विज्ञानतया बृहत्। नन्वत्र य एषोऽक्षिणि पुरुषो दृश्यते इत्यादिना परमात्मोपदिश्यते। अन्यो वा न तत्राक्षिपुरुषः परमात्मा संभवति। एतंत्वेव भूयोऽनुव्याख्यास्यामीत्यादिनोपक्रमं कृत्वा स्वप्नाद्यवस्थायाः प्रतिपादनात्। न चान्यः कश्चिच्छायादि पुरुष एव वा प्रजापतिनो पदिष्टः, आत्मजिज्ञासया समागतयोरिन्द्रविरोचनयोः आत्मातिरिक्तस्योपदेशायोगात्। तथात्वे प्रजापतेः प्रतारकत्वमापतेत्। एवं छायापुरुषस्यात्मत्वामृतत्व ब्रह्मत्वाद्ययोगाच्च। तस्मात् प्रकृते प्रजापतिना प्रत्यगात्मन एवोपदिश्यते। न च नेत्रे जीवस्थितिरुपदिश्यते। किन्तु नेत्रस्य प्रसादविकाराभ्यां जीवस्य शरीरे स्थितिगती निश्चीयेते। एवं च नेत्रस्य जीवस्थितिगतिसूचनात् अक्षिणि पुरुषो दृश्यते इति कथितम्। ततश्च यथा किञ्चित्कालं गृहादौ स्थित्वा गृहान्निर्गच्छन् देवदत्तादि गृहादन्यो न

**भग वोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ**

तु गृहरूप एवं देहे स्थितिगतिमानपि जीवोदेहाद्भिन्न एवेति कथितं भवतीति। ( अथ योऽयमित्यादि ) प्रजापतिना कथितं नेत्रे पुरुषो दृश्यते इत्येवं प्रजापतिवचनं श्रुत्वा छायारूप एवात्मेति तौ गृहीतवन्तौ तादृश छायारूपमेवात्मानं दृढीकर्तुं प्रजापतिं पुनः प्रजापतिं प्रति प्राह। हे भगवः भगवन्! योऽयं छायापुरुषोऽप्सु जले परिख्यायते ज्ञायते यश्चायमां दर्शादौ च परिज्ञायते। प्रतिबिम्बरूपेण कतम एष आत्मा: अर्थात् यश्चक्षुषि दृश्यते स एवादर्शं जलादौ विद्यते तदन्यो वा कश्चिदिति। एवं ताभ्यां पृष्टः प्रजापतिः प्राह ( एष उ इत्यादि ) सः प्रजापतिः प्रोवाच हे इन्द्रविरोचनौ; एष एव सर्वेषु अन्तेषु परिख्यायते। यश्छायारूपश्चक्षुषि मया कथितः स एवात्मा सर्वान्तरो जलादिष्वपि विद्यते इति। ननु विनयादागतस्य शिष्यभ्रमो निराकरणीयो गुरुणा। परन्तु शिष्यभ्रममति-रस्कृत्वैव तद्भ्रमदृढीकरणार्थमित्थमुत्तरं ददतः। प्रजापतेः प्रतारकत्व-मापततीति चेत् सत्यम्। देवासुराविन्द्रविरोचनौ स्वकीयात्मनि अध्या-रोपित पाण्डित्य महत्वातिशयौ महत्वातिशयतया लोके ख्यातौ च। तत्र यदि प्रजापतिरेवं कथयेत् भवन्तौ भ्रान्तौ तदा चित्तावसादात् पुनः प्रश्नकरणे तदुत्तरश्रवणे च तौ द्वौ भग्नोत्साहौ स्याताम्। तस्मात् यत् पृच्छति तावन्मात्रस्येदानीं वक्तव्यमिति। न च यथा श्रुतो-त्तरेणेन्द्रविरोचनयोः पूर्वोत्पन्नप्रतिबिम्बे आत्मभ्रमो दृढतर एव भवेदिति वाच्यम्। दृढतरस्यापि विभ्रमस्य उदशरावदृष्टान्त प्रदर्शनो-पायेनापनेष्यमाणत्वात्। अतएव प्रतिबिम्बात्मविभ्रमापनयनार्थम् उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथः तन्मे प्रब्रूतमित्यादि-नोदशरावदर्शने तौ नियुक्तवन्तौ। अथवा यथोक्ताभिप्रायस्यातिक्लिष्ट-त्वात्। अथ योऽयं भगवोऽप्सु इत्यादि सर्वं प्रश्नवाक्यमेव। प्रश्न-

**एवैषु सर्वेष्वन्तेषु परिख्यायत इति स होवाच ॥ ४ ॥**

**इति छान्दोग्योपनिषदः अष्टमाध्यायस्य सप्तमः खण्डः ॥७॥**

# अथ अष्टमाध्यायः अष्टमः खण्डः ।

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथ स्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापति रुवाच किं पश्यथ इति । तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति॥१॥**

वाक्यस्य मध्ये विद्यमान इति शब्दः प्रश्नान्ते निवेशनीयः । इति स होवाचेत्येतत् । उत्तरस्योदशराव ब्राह्मणस्याङ्गभूतम् । उद शरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति होवाचेत्येवं क्रमेणोत्तरेणान्वयः कर्तव्यः तच्चैक इति शब्दः समाप्तिवाचकोऽन्यस्तु प्रकार वचन इति ।

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

( उदशरावे इत्यादि ) हे इन्द्रविरोचनौ युवां उदशरावे उदकं जलं तत्परिपूर्णे पात्रविशेषे आत्मानमवेक्ष्य दृष्ट्वा तदनन्तरं यत् तत्र जले आत्मानं पश्यन्तौ न विजानीथः तत् वस्तु मे मम प्रब्रूतं कथयतम् । एवं प्रकारेण प्रजापतिनोक्तौ इन्द्रविरोचनौ प्रजापतिकथितप्रकारेणावेक्षाञ्चक्रातेऽवलोकनं कृतवन्तौ । ततः स्वकीयं प्रतिबिम्बमवलोकितवन्तौ दृष्ट्वापि दोषाग्रहणात् तूष्णीमेव स्थितौ । तज्ज्ञात्वा तौ प्रजापतिरुवाच । युवां किं पश्यथ उदकशरावे तदनन्तरं तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपम् । अर्थात् हे भगवन् ! प्रतिबिम्ब

**तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति । तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥**

**तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वः एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृ-**

रूपमेवात्मानं पश्यावः । एवं क्रमेण प्रतिबिम्बात्मभ्रममेव कथितवन्ताविति ॥ १ ॥

"तौ ह प्रजापतिरुवाचेत्यादि" तौ इन्द्रविरोचनौ प्रजापतिरुवाच कथितवान् हे इन्द्रविरोचनौ । युवां साध्वलङ्कृतौ शोभनालङ्कारवन्तौ सुवसनौ शोभनवस्त्रवन्तौ परिष्कृतौ शरीरादीनां परिष्कारविशिष्टौ भूत्वा उदशरावे जलपूरितपात्रे स्व स्वरूपमवेक्षेथाम् पश्यथम् । ततस्तौ ह तथा कृतवन्तौ । ततः प्रजापतिः पुनरपि तौ प्रत्युवाच किं पश्यथ इति ॥ २ ॥

तदनन्तरं तौ इन्द्रविरोचनौ ऊचतुः । हे भगवन् ! यथा आवां साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वः भवाव एवमेव इमौ जलस्थ आवयोः प्रतिबिम्बौ साध्वलङ्कृतौ सुवसनौ परिष्कृतौ एवमूचतुः ! ननु देहप्रतिबिम्बदर्शनाय जलपात्रे नियोगं कुर्वतः प्रजापतेः कोऽभिप्राय इति चेदित्थम् उत्पादविनाशशील द्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूत केशनख वस्त्रालङ्कारादिस्वरूप दोषगुणयुक्ता व्यवस्थितशरीरानुकारि दोषगुणयुक्तत्वेन शरीवत् तदीय प्रतिबिम्बोऽपि नात्मा स च निरतिशय सुखरहितो मरणादि धर्मवानिति जानीतम् । एवं द्विप्रकारक नियोजनकरणेऽपि तयोरशुद्धान्तःकरणतया दोषा स्फुरणात् एतयोः प्रतिबिम्बे आत्मविभ्रमो न निवृत्तः तदनन्तरं प्रजापतिः एतयो भ्रम निवारणायमपाकृतस्य द्विविध

**तावित्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । तौ ह शान्तहृदयौ प्रवव्रजतुः ।। ३ ।।**

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवावाऽसुरा-**

प्रतिबिम्बदर्शनस्याभिप्रायमशुद्धान्तःकरणतये मौनावगच्छतः प्रत्यक्षं यदि कथयामि यद् भवन्तौ नावगच्छतं तदा इमौ भग्नोत्साहौ भवेताम् तदपि नेष्टम् । अतः तदीयाभिप्रायानुरोधेन प्रतिबिम्बमेवात्मेति निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधाय एष एवात्मा इत्युपदेशेन तयोराकांक्षामपनेष्यामि यदेमौ कालेन शुद्धान्तःकरणौ भविष्यतः । आदास्वयमेव पुनरागमिष्यतो मदीय वचनस्याभिप्रायं वेत्तुमिति कृत्वा प्राह प्रजापति एष ते आत्मा अमृतमभयमेतद् ब्रह्मेति । इत्थमुपदेशकरणेन प्रतिबिम्बमेवात्मानं निश्चित्य तौ शान्तहृदयौ सन्तौ प्रवव्रजतुः आकांक्षारहितौ स्वस्थानं गन्तुं मनोदधाते ।। ३ ।।

( तौ हेत्यादि ) एवं यथोक्तप्रकारेण तयोरिन्द्रविरोचनयो र्भोगाविष्टचित्तयोः प्रतिनिवृत्तयोः प्रजापति र्ब्रह्मा प्रतिबिम्बमात्मानं जानन्तौ इमौ श्रेयो मार्गात् भ्रष्टौ माभूतमिति मत्वा स्वसमीपवर्ति पुरुषं प्रति उवाचोक्तवान् । अयं भावः साक्षात् यदि कथयिष्यामि यत् भवन्तौ आत्मतत्त्वमज्ञातवन्तौ तदा भग्नोत्साहः स्याताम् । अतः 'य आत्माऽपहतपाप्मा' इति वचनवत् इदमपि मद्वचनं कर्णाकर्णिकतया शृणुतामित्येभिप्रायणोक्तवानिति । किमुक्तवान् ब्रह्मा तत्राह ( अनुपलभ्येत्यादि ) अनुपलभ्य अपहतपाप्मत्वादि गुणकमात्मानमननुविद्य श्रवणमननाभ्यामज्ञात्वैव व्रजतो गच्छतः । यतरे ये केचन देवा असुरादयो वा एतदुपनिषदो भविष्यन्ति । अत्रोपनिषत् शब्दो न ज्ञानपरको अपितु उपदेशपरकः । तथा च एतयोरिन्द्रविरोचनयोरात्मनि भ्रान्तयो-

**वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽ-सुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाच आत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नु-भौ लोकाववाप्नोतीमञ्चामुञ्चेति ॥ ४ ॥**

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरोब-**

रुपदेशात् ये केचन भ्रान्तिगृहीतार्थविषयक निश्चयवन्तौ भविष्यन्ति ते देवा वा असुरा वा पराभविष्यन्ति पराभवं प्राप्स्यन्ति। नियमतः संसारभाज् एव भविष्यन्ति। वस्तुतः संसारविनाशकात्मज्ञानाभावात्। संसार दृढतासम्पादकभ्रान्तिनिश्चयवत्वाच्चेति (सहेत्यादि) ततः प्रजापतेरुप-देशात् देहमेवात्मानं मन्वानो देहपरिचर्ययैव सर्वं मे भविष्यतीति निश्चयं कृत्वा शान्त हृदयो निराकांक्षो विरोचनोऽसुरराट् असुरान् प्रति जगाम गतवान्। प्रजापतेरुपदेशं वक्तुम् तेभ्योऽसुरेभ्य स विरोचन ह एतामुपनिषदं शरीरात्मबुद्धिरूपां प्रोवाच प्रोक्तवान्। किमुक्तवान् तत्राह (आत्मैवेहेत्यादि) शरीरमेवात्मेति प्रजापतिना कथितः। तस्मात् आत्मैव देह एवमहय्यः पूजयितुं योग्यः। तथा आत्मा देह एव परिचर्यः परिचरणीयः तत् आत्मानं देहमेव महयन् पूजयन् आत्मानं देहे च परिचर्यन् तस्यैव परिचरणं कुर्वन् उभौ लोकौ इह परलोकौ इमं मनुष्यलोकं च अमुं च परलोकं प्राप्नोति। देह पूजयैवेहलोक परलोक-जनित सुखभागी भवति। तस्माद् देह एवात्मेति ॥ ४ ॥

तस्मात् कारणात् विरोचनस्यैष सम्प्रदायोऽद्यापि परम्परारूपेणा-गच्छत्येव। तत्राह तस्मादित्यादि। यस्मात् कारणात् विरोचनाद्य-सुरेभ्य एवेयं पूर्वोक्तोपनिषत् प्रवृत्ता देहात्मवादश्च प्रचलितः तस्मात् कारणात् इह लोके अद्यापि वैदिककर्मानुष्ठायिनः शिष्टाः अददानं दानमकुर्वन्तम्, अश्रद्दानं श्रद्धाविरहितम् अयजमानं यागमग्नि-

तेऽत्यसुराणां ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेना-लङ्कारेणेति संस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते॥५॥

इति छान्दोग्योपनिषदः अष्टमाध्यायस्य

अष्टमः खण्डः ॥ ८ ॥

## अथ अष्टमाध्यायः नवमः खण्डः ।

**अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वय-**

होत्रादिकमकुर्वाणं पुरुषं "आसुरोबतेति" । असुरोऽयमिति । असुर-स्वभावक इति आहुः कथयन्ति । यतोऽसुराणां विरोचनादीनां हि एषो-पनिषत् दानयागश्रद्धारहिता नास्तिक्य बुद्धिरसुरानामेवेत्यर्थः । तेऽसुर-स्वभावाः यस्माद्देहस्यैवात्मतया पूजनादिकं कुर्वन्ति । तस्मात् प्रेतस्य प्राणसम्बन्धरहितस्य मृतस्य पुरुषस्य शरीरं देहं भिक्षया भिक्षां कृत्वापि यस्तु स्वयं लौकिकधनसम्पन्नः स तु स्वयमेव यस्तु दरिद्रः स भिक्षां कृत्वापि वसनेन महार्हं वस्त्रेणालङ्कारेण कुंकुमचन्दनादिना मृतदेहमात्मानं मन्यमानाः संस्कुर्वन्ति पूजयन्ति । पूजयित्वा च दाहादिकं कुर्वन्ति । एतेन कुणपसंस्कारेणैव ह्यमुं लोकं जेष्यन्तो मन्यन्ते । परलोकजयं मन्यमानास्तथा कुर्वन्तीति ॥ ५ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य

अष्टमः खण्डः ॥ ८ ॥

( अथेत्यादि ) अत्राथ शब्दो विरोचनवृत्तान्तादनन्तरमिन्द्रवृत्तं दर्शयितुमानन्तर्यार्थकः । ह शब्दो वृत्तावद्योतनार्थः । इन्द्रो देवराजः प्रजापतिसकाशाद्विनिवृत्तोऽपि देवान् देवसभामप्राप्यैव तत्रागत्यैव एतत् वक्ष्यमाणप्रकारकं भयं ददर्श अपश्यत् । देवराजस्य नित्यनैमित्ति

**मस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुव-सनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष**

कादि कर्मणा विशुद्धान्तःकरणत्वात् देहे आत्मभ्रमो न जातः । स तु स्वकीयं राजभवनमप्राप्यैव देवेभ्य स्तदुपदेशात् पूर्वमेव मार्गमध्य प्रतिबिम्बस्वरूपे आत्मनि वक्ष्यमाणं दोषं दृष्टवानिति भावः । भयस्वरूप-मेव विवृणोति । ( यथैवेत्यादि ) यथा येन प्रकारेणैव खलु अयं देहस्य प्रतिबिम्बः अस्मिन् पुरोवर्तिनि शरीरे कार्यकारणसमुदाये साधु सम्यगलङ्कृते सति वस्त्रालङ्कारादिना पूजिते सति अयमपि प्रतिबिम्ब-स्तथैवालङ्कृतो भवति । सुवसने वस्त्रविशिष्टे सति सुवसनः शोभन-वस्त्रवान् भवति । परिष्कृते अपाकृतनखलोमादिके परिष्कृतः अपगत नखलोमादिको भवति । प्रतिबिम्बः एवमेवायं प्रतिबिम्बोऽस्मिन् शरीरे अन्धे नेत्रविहीने सति अन्धो भवति । नेत्ररहितो भवति । स्रामे स्रामो भवति । चक्षुर्नासिका वा यस्य नियमतः स्रवति स स्राम इति कथ्यते । यथा देहे नासिकास्रावे प्रतिबिम्बेऽपि नासिकादिः स्रवती वा लक्ष्यते । परिवृक्णे परिवृक्णः । तत्र वृक्णः छिन्नहस्तपादादि तथा च हस्तादौ छिन्ने जाते प्रतिबिम्बोऽपि छिन्नहस्तादिरिव लक्षितो भवति । तथा अस्य बिम्बभूत शरीरस्य नाशे सति तदनु अयं प्रतिबिम्बोऽपि नश्यति । तस्मादहमत्रास्मिन् देहात्मदर्शने भोग्यं फलं न पश्यामि । अयं भावः इन्द्रो हि अन्वयव्यतिरेकाभ्यामेवमवधारितवान् यदयं प्रतिबिम्बो देहानुकारी । यतः शरीरे अलङ्कृतेऽयमप्यलङ्कृतो भवति यथा तथा इन्द्रियविकले सोऽपि करणविकलो भवति । एवं तन्नाशे सोऽपि नष्टो भवति । ततश्च यः उत्पादविनाशशाली स अमृतमयत्वादि गुणक आत्माकथं संभविष्यति । पृष्टश्च मया तादृश आत्मा । यज्ज्ञानेन संसार-

नश्यति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति । स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनु-

निवृत्तिर्भवेत् । तादृशश्चायं देहात्मवादो न युक्त्या घटते । अतः प्रजापते र्नात्र निर्भर इति ॥ १ ॥

( स समित्पाणिरित्यादि ) एवं पूर्वोक्त प्रकारेण देहात्मवादेऽनात्मत्व निश्चयं कृत्वा आत्मानं ज्ञातुं स इन्द्रः समित्पाणिः समिद्धार हस्तो भूत्वा प्रजापतिं प्रति एयाय आगतवान् । पुनरपि स्व समीपमागतं तमिन्द्रं प्रजापति ब्रह्मा प्रोवाच । मघवन् ! हे इन्द्र ! शान्त हृदयः दोषाशंकारहितः विरोचनेन साद्धं सह यत् यः त्वं प्राव्राजीर्गतवान् । स त्वं पुनः किमिच्छन् कं कार्यविशेषमभिलषन् पुनरागमः पुनरागतोसि । सर्वं जानन्नपि प्रजापति इन्द्रस्याभिप्रायमभिव्यञ्जयितुं पुनः पप्रच्छ । एवं ब्रह्मणा पृष्टो मघवा च ( यथैवेत्यादि ) व्याख्यात पूर्वोऽयं ग्रन्थ इति न पुनर्व्याख्यायते जिज्ञासुभिः स्वयमेवोहनीयः, ॥ २ ॥

(एवमेवैष इत्यादि) हे मघवन् ! यत्त्वया कथितं देहात्मविषये भयादिकं तत् एवमेव सत्यमेव सर्वम् । अहमप्यनुमोदयामि । इत्येवं रूपेण प्रजापति रिन्द्रमुवाच । एतमुक्तममुमेवात्मानं ते तव त्वदुक्तदोषरहिततया भूयः पुनरपि अनुव्याख्यास्यामि प्रतिपादयिष्यामि । त्वं तु स्वकीयान्तःकरण

**व्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥**

इति छान्दोग्योपनिषदः अष्टमाध्यायस्य
नवमः खण्डः ॥ ९ ॥

## अथ अष्टमाध्यायः दशमः खण्डः ।

**य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचै-तदमृतमभयमेतद्ब्रह्मेति स ह शान्त हृदयः प्रवव्राज स हा-प्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदं शरीरमन्धं भवत्य-**

विशुद्ध्यर्थमपराणि द्वात्रिंशद्वर्षाणि यावत् मत् समीपे वस ब्रह्मचर्यं, ब्रह्मचर्य-पूर्वकं द्वात्रिंशद्वर्षाणि यावदत्र निवासं कुरु ततस्ते यदहं कथयिष्यामि । तद्विशुद्धान्तःकरणत्वात् सम्यगवगतं भविष्यतीति भावः । ततः स इन्द्रः प्रजापतिनाज्ञतस्तथैवकृतवान् । तदेवाह सहापराणि द्वात्रिंशतं वर्षाण्युवास इति । "तस्मै होवाच" एवं पुनरपि द्वात्रिंशतं वर्षाणि उषितवते मघवते प्रजापति र्वक्ष्यमाणमुपदेशमुवाचेति ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य
नवमः खण्डः ॥ ९ ॥

एष आत्मा यः स्वप्ने स्वप्नास्वस्थायां महीयमानः स्त्रीपुत्ररथादिभिः पूज्यमानश्चरति नानाप्रकारक स्वप्नदर्शनमनुभवति एषः स्वप्नद्रष्टा स ते आत्मा एतदमृतम् मरणादिधर्मरहितोऽभयं भयादिवर्जितः एतद्ब्रह्म इति प्रजापतिरुवाच । एष एव स्वप्नदृक् निरतिशय सुखस्वरूपामृतत्व युक्तस्ते आत्मेति प्रोक्तवान् प्रजापतिरिति । नायमात्मा शरीरगतान्धत्वाद्यनुवि-धायित्वलक्षणदोषयुक्त इति भावः । स ह मघवान् शान्तहृदयः प्रवव्रा-

नन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्येव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति । स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न वधेनास्य हन्यते नास्य स्राम्येणस्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतंत्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिंशतं वर्षाणीति

जेत्यादि पूर्व वद्व्याख्येयः । एतदेवदर्शयति (तद्यद्यपीत्यादि) तदेतच्छरीरं यद्यपि आन्ध्यदोषयुक्तं भवति तथापि स्वप्नदृगात्मा नान्धोभवतीत्यादि पूर्ववत् ॥ १ ॥

( घ्नन्तीत्यादि ) यदि कोप्येनमात्मानं स्वप्नावस्थं केचन घ्नन्तीव केचन विच्छादयन्ति द्रावयन्तीव भान्ति तदा स अप्रिय वेत्येव भवति रोदती वाभाति । अतो ह यत्रापि भोग्यं फलं न पश्यामि हन्यमानत्व द्राव्यमाणत्व परिवार मरणाद्यप्रियवेत्तृत्वादिदर्शनात् स्वप्नावस्थस्य न किमपि भोग्यमस्तीति भावः ॥ २ ॥

स समित्पाणिः पुनरेयायेत्यारभ्य खण्डसमाप्ति पर्यन्तं पूर्ववदेव

स हाऽपराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥४॥
इति छान्दोग्योपनिषदः अष्टमाध्यायस्य
दशमः खण्डः ॥ १० ॥

## अथ अष्टमाध्यायः एकादशः खण्डः ।

तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १॥

स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच

व्याख्येयम् ॥ -४ ॥
इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य
दशमः खण्डः ॥१०॥

"तद्यत्रेत्यादि" यत्र यस्मिन् काले तदेतत् स एष पुरुषः सुप्तः समस्तः समुप संहृतेन्द्रिय स समुदायः सम्प्रसन्नो बाह्यविषयसम्बन्धजनितदोष रहितः स्वप्नं स्वप्नकालिकं विषयं न जानाति नावगच्छति एष एव ते तवात्मेति प्रजापतिरुवाचामृतत्वादि गुणयुक्त इति ।

सहेत्यादि पूर्ववदेव व्याख्येयः । दोषदर्शनमेव दर्शयति ( नाह खलु इत्यादि ) अयमात्मा सम्प्रति सुषुप्त्यवसरे अयमहमस्मीति न विजानाति स्वविषयक स्वेतर विषयक विशेषविज्ञानाभावे न च सुषुप्तो विनष्ट इव भवतीति ॥ १ ॥ स समित्पाणिरित्यारभ्य एवमेष मघवन्निति होवाचै-तत्पर्यन्तप्रकरणं पूर्ववदेव व्याख्येयम् ॥ २ ॥

मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनु व्याख्यास्यामि नो एवान्यत्रैतस्माद्वसाऽपराणि पञ्चवर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतं सम्पेदुरेतत्तद्यदाहुरेकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ३ ॥

## इति छान्दोग्योपनिषदः अष्टमाध्यायस्य एकादशःखण्डः ११

( एतमित्यादि ) एतस्मात् पूर्वोक्तादन्यत्रान्यत् न भूयो व्याख्यास्यामि । किन्तु एतमेव पूर्वोक्तमेवात्मानंदोषराहित्येनानुव्याख्यास्यामि प्रतिपादयिष्यामि, अपराणि पंचवर्षाणि यावत् ब्रह्मचर्यपर्यन्तं वस निवासं कुरु । स मघवान् प्रजापतिवाक्यमवधार्य चित्तशुद्धयर्थं तथा चकार । एवं कृते सति तानि ब्रह्मचर्यपूर्वक प्रजापतिसमीपे उवास । वर्षाणि एकशतं संकलनया एकाधिकशतं वर्षाणि सम्पेदुः सम्पन्नानि । यत् पूर्वं जना आहुः कथयन्ति देवराजः प्रजापतेः समीपे एकशतं ह वै वर्षाणि एकाधिकशतवर्षं यावत् ब्रह्मचर्यं ब्रह्मचर्यपालनपूर्वकं उवास निवासं चकारेति । तत् एतदेव एवमेव नात्र कश्चन सन्देहः । सर्वं तथ्यमेवेति । तस्मै एकाधिकशतवर्षपर्यन्तं ब्रह्मचर्यपूर्वक निवासेन शुद्धान्तःकरणाय मघवते शुद्धात्मस्वरूपयोग्यतां सम्यक्परीक्षापहतपाप्मत्वादि गुणकात्मन उपदेशमुवाच समुक्तवानिति ।

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्यएकादशः खण्डः ॥११॥

# अथ अष्टमाध्यायः द्वादशः खण्डः ।

**मघवन् मर्त्यं वा इदंशरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै स शरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

**अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि**

मघवन्तं किमुवाच प्रजापतिस्तत्राह (मघवन्नित्यादि) हे मघवन्! इदं परिदृश्यमानं कार्यकरणसंघातलक्षणं मर्त्यं मरणधर्मि मृत्युना आत्तं व्याप्तं सर्वदैव विनाशलक्षणलक्षितं ननु कदाचित् देहासमवायिकारणसंयोगस्यावयवोपचयापचयाभ्यां प्रतिक्षण विनाशात् देहो विनाशशाली। शरीरे-वैराग्यभावनार्थं विनाशित्वप्रदर्शनं तदेतत्शरीरं अमृतस्य स्वकर्मसंगादित देहराहित्यलक्षणामृतत्वस्वरूपस्य अशरीरस्य स्वभावत एव शरीरत्रय रहितस्यात्मनः नित्य चैतन्यलक्षणस्याधिष्ठानं भोगस्थानं कर्मबलादयं जीवः कर्मफलोपभोगाय आश्रयतया शरीरं परिगृह्णाति। वस्तुतोऽशरीरत्वमेव तस्य स्वरूपम्। अशरीरत्वमेव मोक्षः। स शरीरत्वे च संसारः। आत्तो ह वै स शरीरः प्रियाप्रियाभ्यां, तत्र स शरीरः स्थूलसूक्ष्मादि देहयुक्तो जीवो वै प्रियाप्रियभ्यां सुखदुःखाभ्यां आत्तो युक्त एव भवतीति। (न ह वै इत्यादि) स शरीरस्य शरीरविशिष्टस्य देहिनः सतः प्रियाप्रिययोः सुख-दुःखयोरपहतिरसम्बन्धो विनाशो वा नास्ति न भवति। यावत्पर्यन्तं शरीर संबन्धस्तावत् पर्यन्तमवश्यम्भावीसुखदुःखयोः संसर्गः। सुखदुःखसम्बन्धस्य शरीरसम्बन्धव्यातत्वात्। एतदेव वस्तुव्यतिरेकमुखेन दर्शयति ॥ १ ॥

(अशरीरमित्यादि) अशरीरं शरीरसम्बन्धविवर्जितं जीवं प्रियाप्रिये सुखदुःखे संसाराङ्गभूत न स्पृशतः व्यापकाभावेन व्याप्याभावस्यार्थ

**तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि निष्पद्यन्ते एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभि निष्पद्यते ॥२॥**

**स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः**

सिद्धत्वात् । अशरीरो वायुः वायुरशरीरो हस्तपादादि अवयवरहितः अभ्रम जलवर्षणसमर्थो मेघः विद्युत्, स्तनयित्नुः स शब्दो मेघः एतान्यभ्रादीनि अशरीराणि हस्तपादाद्यवयवरहितानि प्रियाप्रियसम्बन्धरहितानि भवन्ति । तद्यथा एतानि वायुप्रभृतीनि, अमुष्मात् आकाशात् यत्राकाशे स्थित्वा स्वस्वकार्यकरणे समर्थ आसीत् । तस्मात् समुत्थाय स्वकार्य करणायतनऊर्ध्वदेशेऽभिवृद्धःसन् परमज्योतिः स्वकारणमुपसम्पद्य प्राप्य स्वेन रूपेणाभिनिष्पद्यते, वायु प्रभृति द्रव्याणि कारण द्रव्यं कारण द्रव्यमवाप्य स्वकीयां पूर्वकालिकीं कार्यावस्थां परित्यज्य कारणसमानेन रूपेण विशिष्टानि भवन्ति । तत्र वायुः प्रवहादि सत्त्वरूपं विहाय वायुत्व लक्षण सामान्य धर्मेणावस्थितो भवति । विद्युत् तु चपलादि तेजो लतारूपं विहाय तेजस्त्वमात्रेण अवतिष्ठते । अभ्रोऽपि स्वकीयं रूपं परित्यज्य स्वकारणरूपेणावतिष्ठते । एवं दार्ष्टान्तिके एषो जीवः सम्प्रसादस्तदुपलक्षितो जीवः । अस्मात् शरीरात् समुत्थाय मार्गविशेषेण गच्छन् परम ज्योतिर्देशविशेषनिष्ठं परं ब्रह्म प्राप्य स्वेन रूपेण स्वकीयेन रूपाभि निष्पद्यते युक्तो भवति । जीवोऽप्यभ्रादिवत् शरीरसम्बन्धराहित्यात् अर्चिरादि सम्प्रदायोक्त मार्गविशेषेण परवैकुण्ठाद्यपरपर्याय साकेतदेशविशेषविशिष्टं रामाख्यं परंब्रह्मसम्प्राप्य दुःखशोकादि संसार्यवस्थापरित्यागपूर्वकं परमात्मसदृशरूपेणाविर्भवतीति भावः ॥ २ ॥

( सः उत्तमः पुरुष इत्यादि ) सः यः पुरुषविशेषः । सः प्राप्तिकर्त्ता जीवः प्राप्नोति सः भगवान् उत्तमः पुरुषः । उत्तमश्चासौ पुरुषश्च क्षराक्षराभ्यामुत्कृष्टः । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति गीता-

**स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥**

वचनात्। न तु जीवः प्रकरणविरोधात्। स उपसम्पत्ता जीवः तत्र पुरुषोत्तमे भगवति अनन्त ब्रह्माण्डादि नायके रामाख्ये परं गुरौ पर्येति परितोऽनुभवति। अथवा अनुसंचरति तथा च श्रुत्यन्तरं "कामरूप्यनुसञ्चरन्" यत्र यत्र धाता गच्छति इति यद्वापर्येति भगवन्तं परिचरति परितो गच्छति प्रदक्षिणं करोति। अर्थात् सेवकः स उत्तमपुरुषं सर्वदैव कैङ्कर्येणोपास्ते। अतएव जक्षण क्रीडनादिकं सर्वमेव पुरुषोत्तमस्य भगवतः परिचर्यारूपमेव भगवत्सान्निध्यं गतस्य भवतीति भावः। जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा। स्त्र्यादिभिः क्रीडादिकं कुर्वाणः स्वेच्छया यथेष्टं भोगान् प्राप्नोति। तत्रोपभोगंकुर्वाणः 'नोपजनं स्मरन्निदं शरीरम्'। उपजन स्त्रीपुरुषयोः संयोगादिदं शरीरं जातमित्यस्मरन्। स मुक्तः स्त्र्यादिभिः क्रीडा समये इदं शरीरं स्त्री-पुरुषसंपर्कादेव जायते इत्याकारक स्मरणरहित एव क्रीडनानुभव करोतीत्यर्थः। अथवा उपजनं जनानां पुत्रकलत्रादिबन्धुवर्गाणां समीपे शयितं कुणपमित्यस्मरन्नेव क्रीडति। यद्यपि मुक्तो हि पुरुषः सर्वज्ञत्वात् त्यक्तशरीरमपि जानन्त्येवान्यथा सर्वज्ञत्वं तस्य मन्येत। तथापि ब्रह्मभिन्नतया दुःखरूपत्वेनानुभूतं शरीरादिकं मोक्षसमये नानुभवति। ततोऽस्मरणं शरीरादेर्न सर्वज्ञत्व क्षतिकारकं भवतीति। ननु यदि आत्मा-स्वभावतोऽशरीरस्तदा कथं तस्य प्राक्कालिक शरीरसम्बन्धो जातो यदपगमेनायं मुक्तो भवति तत्राह "स यथा प्रयोग्यइत्यादि" यथा येन प्रकारेण प्रयोग्यः युग्योअश्वो वृषभो वा आचरणे रथादौ पाशेन युक्तो भवति। एवमेव तथैव प्राणः प्राणसह कृतोजीवः संसारसमये कर्मबन्धनेन युक्तो बद्धो भवति। एतावता शकटदृष्टान्तेन शरीरात्मनोर्भेदः स्पष्टीकृतो भवति ॥ ३ ॥

**अथ यत्रैकदाकाशमनुविषण्णं चक्षुः सचाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥**

शरीरात्मनोर्भेदं दर्शयित्वा इन्द्रियात्मनोरपि भेदं दर्शयितुमाह :— अथ यत्रैतदित्यादि । अथ यत्र यस्यामवस्थायां आकाशं प्रकाशमालोकादि यद्वा प्रकाशविषयत्वादाकाशं रूपादिकम् । तथा च यस्मिन्साधनत्वेनानु विषण्णं निबद्धं सचक्षुः चक्षुरिन्द्रियं रूपादिकं भाष्यमानं भासयति स चाक्षुश्चक्षुकरणः पुरुष आत्मा चक्षुरूपकरणं चाक्षुषज्ञानाय यस्य स चाक्षुषः । अत्र बहुब्रीहौ अन्य पदार्थ आत्मा ततश्च चक्षुः करणकमुद्दिश्य पुरुष शब्देन आत्मत्वस्य तस्मिन् विधानं भवति । दर्शनाय चक्षुः तत्र दर्शनाय चाक्षुष ज्ञाने चक्षुः करणमात्रं भवति । करणस्य कर्तृसापेक्षत्वात् कर्ता आत्मैव ज्ञाता ज्ञानस्योत्पादकः रूपादिकं च ज्ञेयम् । यथा छिदादिक्रियायां करणं वास्यादिकं कर्ता कारुः कार्यं छिदैव । तत्सर्वं विभिन्न तथा प्रकृते रूपादिकं ज्ञेयं करणं तत्र चक्षुः कर्ता ज्ञाता आत्मैवेति स चक्षुकरणक इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वमात्मनश्च ज्ञातृत्वकथनेनेन्द्रियभिन्नत्वमात्मनः प्रदर्शितम् । कर्तृकरणयोर्भेदस्य सर्वत्रैव व्यवस्थितत्वादिति । अथ योऽहं जिघ्राणि गंधमित्येवं वेद विजानाति स आत्मा गन्धाय घ्राणं गन्धग्रहणे घ्राणेन्द्रियं करणं ज्ञाता त्वात्मा घ्राणनक्रियायामात्मन एव कर्तृत्वात् । एतावता करणं घ्राणं कर्ता चात्मा ततश्च तयोर्भेद उपदर्शितो भवतीति । अथ यो वेद विजानाति अहं व्याहराणि शब्दमुच्चारयामि स आत्मा । अभिव्याहाय वाक् तत्र करणं वाक् कर्ता आत्मा एतावता वागिन्द्रियेण सहात्म भेद उपपादित इति । अन्यत् सर्वं पूर्ववदिति ॥ ४ ॥

**अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दिव्यं चक्षुः स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान्-पश्यन् रमते य एते ब्रह्मलोके ॥ ५ ॥**

**तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे**

अथ य अहं मन्वानीत्येवं प्रकारेण वेद विजानाति स आत्मा । अस्य मन्तु मन एव दिव्यं चक्षुः । करणं चक्षुरादिकं करणे प्रतिनियत वस्तु ग्राहकं मनस्तु सकलेन्द्रियग्राह्य विषयमननसमर्थत्वात् दिव्यं चक्षुरिति कथ्यते । मनो दशेन्द्रियाध्यक्षमित्यभियुक्तेः चक्षुराधिकं बाह्य वस्तु मात्र ग्राहकं 'पराञ्चि खानि व्यतृणत् स्वयंभूरित्यादि' श्रुतेः मनस्तु बाह्य मान्तरमुभयमपि गृह्णाति । तथा चक्षुरादिकं प्रतिनियत रूपादिग्राहकमेव मनस्तु सर्वं बाह्यमान्तरञ्च गृह्णाति । 'दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः मनसैवेदमाप्तव्यम्' । 'एषोऽणुरात्मा चेतसा वेदितव्य' इत्यादि श्रुतेः । यदा तु मन आत्मानमपि सर्वतोऽणुकरणतया तदा का कथा तदतिरिक्त बाह्याभ्यन्तर वस्तु ग्रहणे । अतो मनसो दिव्य चक्षुष्ट्वेन व्यपदेशः कृतः । समान तंत्रे सांख्येऽपि कथितं 'शान्तः करणाद्बुद्धिः सर्वं विषयमवगाहते यस्मात्' इत्यादिना मनसः सर्व ग्राहकत्वं समर्थितम् । स वा एषः पूर्वोक्त प्रकारेण शरीरेन्द्रिय कार्यकरणभिन्न, आत्मोपासको जीवः दिव्येन मनसा । मनः शब्द प्रतिपाद्येन दिव्येनेन्द्रियान्तर विलक्षणेन चक्षुषा ज्ञानकरणेन ब्रह्मलोके दहराकाशे विद्यमाना ये कामास्तानेतान् कामान् कमनीयान् पश्यन् चाक्षुषविषयतां कुर्वाण्येव अनुभवन् रमन् मोदमानोऽवतिष्ठते । यद्यपि मुक्तस्य मन आदिकं करणं न भवति । स्वेन रूपेणाभिनिष्पन्नत्वात् । तथापि मनः कार्यस्य धर्मभूतज्ञानेन सिद्धि दर्शयितुं दिव्यमिति विशेषणं दत्तमिति ॥ ५ ॥

तमेतं प्रजापतिना मघवते समुपदिष्टमात्मानं मघवतः सकाशात् सर्वे देवाः कुबेरादिका उपश्रुत्य तमेवोपासते । तस्मात् यस्मादिन्द्राय प्रजापत्यु-

**च लोका आत्ताः सर्वे च कामाः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह**

पदिष्टमात्मानं सर्वे देवा उपासते। तस्मात् कारणात् तेषां देवानां सर्वे लोकाः सर्वे च कामा आप्ता प्राप्ताः। देवानामेव सर्वलोक सर्वकाम प्राप्त्युपलक्षित ब्रह्मानुभवो भवति न तु विरोचनाद्यसुराणाम्। ननु यथोक्त-मात्म ज्ञानमिन्द्रव्यतिरिक्त देवानामिन्द्रोपदेशादनन्तरमितः पश्चात् काले एव स्यात्। इति कथमिदानीं प्रजापतिना तस्य निर्देशः कृत इति चेदत्रोच्यते। पूर्वसमये 'य आत्मापहतपाप्मा' इत्यादि वाक्यस्योद्-घोषणं सर्वेषामेवात्माधिगमाय कृतं तत्र देवादयः देव प्रधानमिन्द्र-मसुरास्त्वसुरप्रधानं विरोचनं प्रजापतिसमीपे आत्मानं ज्ञातुमिन्द्र विरोचनौ प्रेषयामासुः। किन्तु अन्तःकरणस्याशुद्धतया यथाश्रुत-मुपदेशं गृहीत्वा विरोचनो निवृत्तः। देवराजस्तु विशुद्धान्तःकरणत्वात् पुनः पुनर्विमृश्य देहात्मवादादिकं परित्यज्य याथार्थ्येनात्मानं जग्राह। तदद्यदेवे तुष्टः प्रजापतिरसुराणामात्मा लाभं देवानामात्मलाभं च सिद्धवत् कृत्वा 'वर्तमान् समीपे वर्तमान् वद्वेति' सूत्र मनुस्मरन् वर्तमाना पदेशं कृतवान्। अथवा देवा इत्यस्य ज्ञानिन इत्यर्थः। ततश्च सनकादयो ये इन्द्रस्यापि देवात्वे तदैव तदात्मानमुपासीना इति। न केवलं देवाना-मेव तदुपासनाफलं जातं किन्तु ये मनुष्याऽद्यतनीयास्तेषामप्येतत्फलं भवतीति दर्शयति। स सर्वांश्च लोकानित्यादि। स उपासको जीवः सर्वान् कामान् सर्वांश्च लोकान् आप्नोति प्राप्नोति सर्वकामाद्युपलक्षितं ब्रह्मानुभवति। यः कोऽपि तमात्मानमपहत गुणकमनुविद्य विजानाति। तमात्मानं ज्ञात्वा तादृशात्मन उपासनकर्तॄणां सर्वेषां मनुष्याणामप्येतत् फलमवश्यमेव भवतीत्यर्थः! नन्वत्र किं प्रमाणं यदत्र सर्वेषां तत्फल प्राप्तिर्भवत्येवेति तत्राह 'इति ह प्रजापतिरुवाचेत्यादि इत्येवं प्रकारेण प्रजापतिः सर्वज्ञः स्वयमेवोवाच। न तद्वचनमनृतमिति। अत्र हि

प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥

इति छान्दोग्योपनिषदः अष्टमाध्यायस्य
द्वादशः खण्डः ॥ १२॥

# अथ अष्टमाध्यायः त्रयोदशः खण्डः ।

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव**

प्रत्यगात्मविद्यायाः ब्रह्मविद्याग्रवयवत्वेनावयविभूत ब्रह्मविद्यायाः यत्फलं तदेव फलं तदवयवभूत प्रत्यगात्म विद्यायामिति एतस्यां तदेव फल मेतद्विद्यास्तुत्यर्थं कथितमिति । अत्र खलु प्रजापतिवाक्ये तु मुक्तस्यात्मनो ज्ञानं दहरविद्योपयोगित्वेन कथितम् । ब्रह्मज्ञानमभिलषितो जीवस्य स्वकीयं स्वरूपमवश्यमेव ज्ञातव्यम् । ततश्च स्वयमपि जीवः कल्याणगुणकः अनवधिक निरतिशयासंख्येय कल्याणगुणं परमात्मानमनुभविष्यतीति परमात्मोपासनफलमध्यपातित्वात् सर्वान् लोकानाप्नोति सर्वान् कामान् प्राप्नोति इति प्रजापतिवाक्ये कथितं फलं दहरविद्याफलमेवेति । प्रजापतिरुवाचेति द्विर्वचनं खण्डसमाप्तिबोधकम् ॥ ६ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

अथ प्रजापतिविद्याकथित जीवस्वरूपस्य य उपासनां करोति तस्य जीवस्वरूपोपासकस्य स यथा क्रतुरिति न्यायात् जीवस्वरूपानुभवात्मकं फलं स्यादपि । परन्तु सर्वलोक प्राप्ति सर्वकाम प्राप्तिः कथं स्यात् । न हि अन्यस्योपासनेऽन्यत् फलं स्यादिति प्रसंगादितीमां शंकां परिहर्तुमाह-श्यामादित्यादि जपार्थोऽयं मंत्रः । ततश्च यदा जीवः परंज्योतिः परमात्मानमुपसम्पद्यते तदैव जीवस्य स्वकीय स्वरूपाविर्भावो भवति । इति तदुपसत्तिरुपायभूतं तदुपासनमपिकर्तव्यमेव तत्रायं मंत्र इति ज्ञाप्यते । तत्र

**रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा**

दहरो हि परमात्मा द्विप्रकारकः हृदयपरिच्छिन्नातिदिव्यशरीरविशिष्टः दहर हृदयान्तवर्ति जीवान्तर्वर्ति च द्विप्रकारकोऽपि परमात्मोपासनीय इति प्रकृत मंत्रेण कथ्यते। एते च मंत्रा विद्याङ्गभूता उपासकैर्जप्तव्याः। परमात्मन उपासनञ्च प्रकारत्रयेण भवति। चिद्विशिष्टतया अचिद्विशिष्ट-तया स्वरूपतश्च। तत्र स्वरूपत उपासने ज्ञानादिगुणकं दिव्यविग्रहयोगित्व-मुपयुज्यते। तादृश दिव्यविग्रहवत्त्व प्रसिद्धये पुण्डरीकाक्षं शरीरम-प्राकृतमुपदिश्यते। 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः', स यश्चायं पुरुषे' इत्यादि श्रुतौ। तत्र यश्चासावादित्ये इत्यत्र शरीरातिदेशो भगवतः कृतः। अयं भावः "य एषोऽन्तरादित्येहिरण्मयः पुरुष", 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि"। तत्र विद्युतो विद्युद्वर्णात् पुरुषात्पर-मात्मनः सकाशात् सर्वे निमेषा जज्ञिरे इत्यर्थः। एवं "नीलतोयद मध्यस्था विद्युल्लेखेव भास्वरा"। नीलजलदमध्ये वर्तमाना या विद्युल्लता तद्वत् सेयं दहर पुण्डरीकमध्याकाशनिष्ठा वह्निशिखास्वान्तर्निहित नील-जलदतुल्य परमात्मस्वरूपा स्वान्तर्निहित नीलजलदाविद्युदिवाभाती त्यर्थः। तस्मान्नीलजलदतुल्यशरीरवैशिष्ट्यं परमात्मनः सिद्धति "श्यामा एकरूपा भवन्ति एवमिव हि प्रजापतिः समृद्धया"। इत्यादौ प्रजापतिशब्दवाच्यस्य परमात्मनः श्यामरूपत्वं प्रतिपादितम्। तस्मात् श्याम इति विग्रहविशिष्टमेव परमात्मनः स्वरूपं कथितं भवतीति। एवं च श्यामादित्यत्र या पंचमी विभक्तिः सा ल्यब् लोपे। ततश्च श्यामं श्यामविग्रहविशिष्टं परमात्मनस्वरूपं समुपास्य शबलं चिदचिद्विशिष्ट परमात्मनः स्वरूपं प्रपद्ये उपासनं करोमि। शबलाच्चिदचिद्विविशिष्टं स्वरूपमुपास्य श्यामं श्यामविग्रहविशिष्टं प्रपद्ये उपासे। ततश्च नरन्तर्येण त्रैविध्येन परमात्मोपासनं कुर्वे इति। अश्व इव रोमाणि विधूय यथा अश्वः स्वशरीरगतं रोमाणि विधुनोति विधूय तद्वतं पांस्वादिकमपा-

**शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसंभवामीति ॥ १ ॥**

इति छान्दोग्योपनिषदः अष्टमाध्यायस्यत्रयोदशः खण्डः १३॥

## अथ अष्टमाध्यायः चतुर्दशः खण्डः ।

**आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशो-**

करोति तद्वत् अयं विद्वान् परमात्मोपासकः स्वकीयं पापं बन्धजनकं कर्मापाकृत्य राहोर्मुखाच्चन्द्र इव शरीरं प्रमुच्य शरीराद्विमुक्तः शरीरपातादनन्तरमित्यर्थः । अकृतं नित्यमविनाशि परमात्मलोकं कृतात्मा कृतार्थात्मा सन् अभिसम्भवामि । भगवतः साकेताधिपते लोकमहं प्राप्नुवामीति । अभिसम्भवामीत्यत्र द्विर्वचनं खण्डसमाप्ति द्योतकम् ॥ १३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्यत्रयोदशः खण्डः ॥ १३ ॥

( आकाशो वै इत्यादि ) श्रुतिप्रसिद्ध आकाशः परमात्मा नामरूपयोर्निर्वहिता नामरूपादीनामुत्पादयिता परमात्मैव । यत् आकाशपदवाच्यं ब्रह्म, ते नामरूपे अन्तरामध्ये वर्तमानं ताभ्यां नामरूपाभ्यामस्पृष्टमसम्बद्धं तत् । तद्ब्रह्म यत् नामरूप कर्तृ तद् ब्रह्म । तदेव ब्रह्मामृतं निरतिशया परिच्छिन्नसुखात्मकम् । स एव परमात्मा आत्मा सर्वव्यापक इत्यर्थः । यद्यपि आकाशपदं प्रसिद्धया भूताकाश परकमिवाभाति । तथापि प्रकरण पर्यालोचनया आकाशपदमत्र परमात्मवाचकमेव । न हि भूताकाशस्य नामरूपोलक्षित समस्त प्रपञ्चजनकत्वं सम्भवति । "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुत्या परमात्मन एव

**ऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ॥ १ ॥**

**इति छान्दोग्योपनिषदः अष्टमाध्यायस्य चतुर्दशः खण्डः॥१४**

## अथ अष्टमाध्यायः पञ्चदशः खण्डः ।

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः**

सर्वजगदुपादानत्वस्य व्यवस्थापितत्वादिति । ( प्रजापतेरित्यादि ) प्रजापतेः परमात्मनः सभां स्थानं वेश्म लोकं प्रपद्ये प्राप्नुवामि । प्रभुविमितं हिरण्मयमिति दहरविद्यायां यन्निर्दिष्टं वेश्म तदहं प्रपद्ये इति । अत्र प्रजापति शब्दो न कार्यं हिरण्यगर्भस्य वाचकोऽपितु परमात्मन एव कार्यब्रह्मणो निराकरणं "न च कार्ये प्रत्यभिसन्धिरिति" सूत्रेण स्वयमेव सूत्रकारो निराकरिष्यतीति किं चाहं यश आत्मा ब्राह्मणानां भवामि, तथा राज्ञां यश आत्मा भवामि । तथा विशां यशो भवामि । अत्र यश इति पदं स्वान्तर्यामिपरमात्मपरकम् । स्यादेतत् कथं तव ब्राह्मणादीन् प्रति यशः शब्दितमात्मत्व तत्राह :—यशोहमित्यादि । अहं यशो यशो लक्षणं परमात्मानमात्मरूपेणाहंत्वेन प्रापत्सि प्राप्तवानस्मि परमात्मानं साक्षात्कृतवानहमस्मि । तस्मात् सोहं परमात्मस्वरूपोऽहम् । यशसां जीवात्मनां यश आत्माऽस्मि । श्वेतं शुक्लधातुं अदत्कं दन्तरहितं श्वेतम् । अत्र श्वेतशब्दो लक्षणया वृत्या सत्वगुणं कथयति । तस्य श्वेतस्य सत्वगुणस्यादत्कं भक्षयितृ चरमधातोः सत्वगुण तदीय कार्यज्ञानादिभ्रंशकत्वात् तद्भक्षकत्वं तादृशं चरमधातुमदत्कं भक्षयितृ लिन्दुं स्त्रीचिह्नं माऽऽभिगाम् न प्राप्नुयाम् । पुनर्मेजन्म मा भूदित्यर्थः, लिन्दु माऽभिगामित्यत्र द्विर्वचनं जप्य मन्त्रसमाप्तिबोधकमिति ।

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायस्यचतुर्दशः खण्डः ॥१४ ॥

( तद्धैतदित्यादि ) तदेतदात्मज्ञानं सोपकरणमेतद्ब्रह्म विज्ञानम्

**प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मा-तिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्य स खल्वेवं वर्तयन्यावदायुषं**

ब्रह्मा हिरण्यगर्भः कमलासनः प्रजापतये कश्यपादि ऋषये प्रोवाच प्रोक्तवान् स च प्रजापतिः कश्यपः मनवे स्वपुत्रायोवाच। स च मनुः प्रजाभ्यः प्रोवाचेति। ननु ब्रह्मज्ञानाङ्गतया कर्मावश्यमेवानुष्ठेयमिति दर्शयितुमाह (आचार्येत्यादि) आचार्यकुलात्तत्राचार्यस्यगुरोः कुलं गृहम् तस्माद्यथा-विधानमध्ययननियमपूर्वकं वेदम् सहार्थेनाक्षरराशिं अधीत्याध्ययनं कृत्वा गुरोराचार्यस्य यत्कर्म तत् कुर्वाणः अतिशेषेण कालेनाधीत्यः गुरुशुश्रूषा-परः तदतिशेषेण गुरुशुश्रूषादि करणकालव्यतिरिक्त कालेनेत्यर्थः "यथा खनन खनित्रेण नरोनार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छ-तीति" स्मृतेः यद्वा अतिशेषेण निश्शेषमित्यर्थः। अभिसमावृज्य समावर्तनं-स्नानादिकं कृत्वा आचार्यकुलान्निवृत्त्येत्यर्थः। कुटुम्बे विवाहं कृत्वा पत्न्या सहितः कुटुम्बे परिवारमध्ये स्थितः गार्हस्थ्यानुकूलकर्मनिरतः शुचौ पवित्रे देशे स्थाने स्थितः स्वाध्यायं वेदमधीयानः स्वयमधीयानोऽन्यान-ध्यापयन् तथा नित्य नैमित्तिक कर्माणि कुर्वन् धार्मिकान्विदधत् पुत्राशि-ष्यादिकंधर्मे धर्मकर्मणि नियुञ्जानः आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य आत्मव्यतिरिक्तविषयेभ्य इन्द्रियनिग्रहं कृत्वा एतावता योगशास्त्रोक्त विधिना ध्यानादिकं सम्पादयन् तीर्थेभ्योऽन्यत्र सर्वभूतानि अहिंसन् कायिक-वाचिक मानसिक हिंसां परपीडामसम्पादयन् एतावता यज्ञादि कर्म कुर्वन् स गृहस्थः खलु एवं यथोक्त प्रकारेणापवर्गसाधनीभूतमुपासनं वर्तयन् यावत् फलप्राप्तिः तावत् पर्यन्तमुपासनं कुर्वन् यावदायुषमुपासनं कुर्वन् न तु सकृत् उपासनं कुर्वन् ब्रह्मलोकमभिसम्पद्यते। यथोक्तोपासनकर्ता

ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते ॥१

आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मामा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

इति छान्दोग्योपनिषदः अष्टमाध्यायः समाप्तः ॥ ८ ॥

भगवत् सायुज्यं प्राप्तो भवति । न च पुनरावर्तते स मुक्तः पुरुषः ततो भगवल्लोकात् पुनर्नावर्तते नागच्छति मुक्तस्य पुनः प्रकृतिवश्यत्वलक्षणावृत्ति र्न भवतीति ॥ १ ॥

अध्ययन जपादि सर्वकार्ये शान्ति पठनार्थमयं मंत्रः ( आप्यायन्तु इत्यादि ) वागादिकरणैः सहितानि ममाङ्गानि आप्यायन्तु आप्यायितानि सन्तुष्टानि भवन्तु । वागादि सर्वाणि इन्द्रियाणि आप्यायितानि भवन्तु । सर्वं ब्रह्मौपनिषदं प्रति । ब्रह्म प्रति ब्रह्मविषये चाहमुपासको न निराकुर्याम् तत्र नास्तिक्य बुद्धिमाकार्षं मामां ब्रह्ममानिराकरोत् निराकरणं माकुर्यात् । अनुगृह्णातु इत्यर्थः । अनिराकरणमस्तु परस्परमनिकरणं भवत्वित्यर्थः ( तदात्मनीत्यादि ) आत्मज्ञानिनो ये धर्माः शान्तिदान्त्यादिका उपनिषत्सु प्रसिद्धाः ते सर्वे धर्मा मयि उपासके सन्तु भवन्तु । द्विर्वचनमुपनित्समाप्तिबोधकम् ॥ २ ॥

इति छान्दोग्योपनिषद आनन्दभाष्येऽष्टमाध्यायः समाप्तः

इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यविभूषितायाः

छान्दोग्योपनिषत् समाप्ता ।

श्रीरामार्पणमस्तु ॥

# ❋ संक्षिप्ततत्त्वत्रयनिरूपणम् ❋

**अथ प्रकृतिनिरूपणम्**

पृष्टानामेकमाद्यं त्रिकमपि शृणु तद्भेदतो नामभेदै—
र्नित्याऽज्ञाऽचेतना सा प्रकृतिरविकृतिर्विश्वयोनिः शुभैका ॥
नाना वर्णात्मकाऽजा त्रिगुणसुनिलयाऽव्यक्तशब्दाभिधेया
निर्व्यापारा परार्था महदहमितिसूरुच्यते तत्त्वविद्भिः ॥१॥

**अथ जीवस्वरूपनिरूणम्**

नित्योऽज्ञश्चेतनोऽजः सततपरवशः सूक्ष्मतोऽत्यन्तसूक्ष्मो
भिन्नो बद्धादिभेदैः प्रतिकुणपमसौ नैकधा सूरिवर्य्यैः ॥
श्रीशाकान्तालयस्थो निजकृतिफलभुक्तत्सहायोऽभिमानी
जीवः संप्रोच्यते श्रीहरिपदसुमते तत्त्वजिज्ञासुवेद्यः ॥ २ ॥

**अथ ईश्वरनिरूपणम्**

विश्वंजातंयतोऽद्धा यदवितमखिलं लीनमप्यस्ति यस्मिन्
सूर्यो यत्तेजसेन्दुः सकलमविरतं भासयत्येतदेषः ॥
यद्भीत्यावाति वातोऽग्निरपि सुतलं याति नैवेश्वरो ज्ञः
साक्षी कूटस्थ एको बहुशुभगुणवानव्ययो विश्वभर्ता ॥३॥
श्रीमानर्च्यः शरण्यो बहुविधविबुधैर्योगिगम्यांघ्रिपद्म।
ऽस्पृश्यः क्लेशादिभिः सत्समुदितसुयशाः सूरिमान्यो वदान्यः ॥
शश्वच्छ्रीरामचन्द्रः सुमहितमहिमा साधुवेदैरशेषै—
र्निर्मृत्युः सर्वशक्तिर्विकलुषविजरो गीर्मनोभ्यामगम्यः ॥४॥

( श्रीवैष्णवमताब्जभास्करतः )

श्रीरामं जनकात्मजा मनिलजं
वेधो वसिष्ठावृषी
योगीशञ्च परशरं श्रुतिविदं
व्यासं जिताच्चं शुकम्।
श्रीमन्तं पुरुषोत्तमं गुणनिधिं
गंगाधराद्यान् यतीन्
श्रीमद्राघवदेशिकञ्च वरदं
स्वाचार्यवर्यं श्रये ॥ १ ॥

त्रिभुवनदास

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ॥

Rulesur Nagpal